मौनिमनोन्तरं वा मुनीनामन्तःकरणविशेषं वा, वृन्दावने पादपा वृक्षाः, तेषु आसितुमुपवेष्टुं योग्यमासम्, वृक्षच्छायासु रचितवेदिकामित्यर्थः। एतत्त्रयमपास्य त्यक्त्वा उपास्यं कृष्णस्य स्थातुमर्हमन्यत्पदार्थान्तरं न विलोकयामः। कृष्णदर्शनार्थमेतत्त्रयमेवान्वेष्टव्यं नान्यदिति भावः॥

एवं मनसि कृष्णे प्रतीयमाने चाक्षुषता प्रार्थयते **साध्यं समृद्धे-रित्यादिना—**

**साध्यं समृद्धेरमृतायमानै-**
**राध्मायमानैर्मुरलीनिनादैः ।**
**मूर्धाभिषिक्तं मधुराकृतीनां**
**बालं कदा नाम विलोकयिष्ये ॥ २३ ॥**

आध्मायमानैः स्वमुखवायुना संपाद्यमानैः, समृद्धेः वेणुनादस्य यावद्गुणाः सन्ति तावद्गुणसंपत्तेः सकाशादित्यर्थः। 'समृद्धैः' इति पाठे तावद्गुणसंपन्नैरिति मुरलीनिनादैरित्यस्य विशेषणम्। अत एव अमृतायमानैः अमृतवदाचरद्भिः। अमृतशब्दादुपमानात्कर्तुराचारार्थे क्यङ्। 'लट शतृशानचौ' इति शानच्। 'आने मुक्' इति मुक्। मुरलीनिनादैर्वेणुनादैः सार्धं मधुराकृतीनां सुन्दरीजनैः। 'क्तस्य च वर्तमाने' इति षष्ठी। मूर्धाभिषिक्तम् अस्मद्राजा भवेत्यभिषेककर्मणा मूर्धाभिषिक्तमित्यर्थः। यद्वा मधुराकृतीनां सुन्दरजनानामिति निर्धारणे षष्ठी। मूर्धाभिषिक्तम्, अतिसुन्दरमित्यर्थः। तादृशं बालं कदा नाम कस्मिन्समये विलोकयिष्ये द्रक्ष्यामि॥ २३॥

**शिशिरीकुरुते कदा नु नः**
**शिखिपिञ्छाभरणः शिशुर्दृशोः ।**

युगलं विगलन्मधुद्रव-
स्मितमुद्रामृदुना मुखेन्दुना ॥ २४ ॥

*शिखिपिञ्छाभरणो मयूरबर्हभूषणः शिशुः बालकृष्णः विगलन्स्रवन्* मधुद्रवः क्षौद्रप्रवाहो यस्मात्तच तत्स्मित च, तस्य मुद्रा संस्थानविशेषः, तया मृदुना कोमलेन मुखेन्दुना नः मम। 'असदो द्वयोश्च' इत्येकवचने बहुवचनम्। दृशोर्नयनयोः युगलं कदा नु कस्मिन्वा समये शिशिरीकुरुते। श्रीकृष्णः स्वमुखदर्शनेनास्मच्चक्षुषोः साफल्यं कदा कुर्यादित्यभिप्रायः ॥ २४ ॥

कारुण्यकर्बुरकटाक्षनिरीक्षणेन
तारुण्यसंवलितशैशववैभवेन ।
आपुष्णता भुवनमद्भुतविभ्रमेण
श्रीकृष्णचन्द्र शिशिरीकुरु लोचनं मे ॥ २५ ॥

अद्भुता गोवर्धनोद्धरणादिनाश्चर्यभूता विभ्रमा विलासा यस्य तेन, अत एव भुवनं जगत् आपुष्णता पोषणं कुर्वता। भुवनमित्यत्र 'न लोक–' इत्यादिना षष्ठीप्रतिषेधः। कारुण्येन दयया कर्बुरं शबलवर्णम्, दयायुक्तमित्यर्थः। कटाक्षनिरीक्षणम् अपाङ्गदर्शनं यस्य तेन, तारुण्येन यौवनेन संवलितं संवृत शैशववैभवं बाल्यसंपद्यस्य तेन शरीरेण हे श्रीकृष्णचन्द्र, मे मम लोचनं शिशिरीकुरु शीतलं कुरु। त्वमस्माकं प्रत्यक्षो भवेति भावः ॥ २५ ॥

कदा वा कालिन्दीकुवलयदलश्यामलतराः
कटाक्षा लक्ष्यन्ते किमपि करुणावीचिनिचिताः ।..

दयादृष्टिं प्रसारयेत्यर्थः । त्वयि सर्वेश्वरे प्रसन्ने सति इह अस्मिँल्लोके अपरैः प्रार्थ्यजातैः नः मम किं प्रयोजनम् । किमपि प्रयोजनं नास्तीत्यर्थः । त्वय्यप्रसन्ने सत्यपि इहापरैः किं नः । निगदव्याख्यानमेतत् ॥

निबद्धमुग्धाञ्जलिरेष याचे
नीरन्ध्रदैन्योन्नतमुग्धकण्ठम् ।
दयाम्बुधे देव भवत्कटाक्ष-
दाक्षिण्यलेशेन सकृन्निषिञ्च ॥ ३० ॥

एषः अयं जनः, अहमित्यर्थः । निबद्धो मुग्धो मूढः वेपथुमान् अञ्जलिर्यस्य तादृशः सन्, नीरन्ध्रदैन्येन संतन्यमानदैन्येन उन्नत उत्तानः मुग्धः गद्गदीकृतः कण्ठः ध्वनिविशेषो यस्मिन्कर्मणि तद्यथा तथा याचे प्रार्थये, त्वत्कटाक्षमिति शेषः । हे देव दयाम्बुधे, भवत्कटाक्षदाक्षिण्यं भवदीयकटाक्षवदान्यता, तस्य लेशो लवः, तेन सकृदेकवारं निषिञ्च आर्द्रं कुरु, मामेकवारं पश्येत्यर्थः । भवत्कटाक्षदर्शनमात्रेण शरभङ्गादिवत्कृतार्थो भवेयमिति भावः ॥ ३० ॥

पिञ्छावतंसरचनोचितकेशपाशे
पीनस्तनीनयनपङ्कजपूजनीये ।
चन्द्रारविन्दविजयोद्यतवक्त्रबिम्बे
चापल्यमेति नयनं तव शैशवे नः ॥ ३१ ॥

पिञ्छावतंसो बर्हभूषणम्, तस्य रचना अलंक्रिया, तस्या उचितः केशपाशः शिखा यस्य तस्मिन्, पीनौ पीवरौ स्तनौ यासाम् । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । तासां नयनान्येव पङ्कजानि, तैः

पूजनीये पूजार्हे, चन्द्रश्चारविन्दं च, तयोर्विजयः, तद्विषयकविजय इत्यर्थः। तत्र उद्यतमुद्युक्तं यद्बिम्बं मुखमण्डलं यस्य तस्मिन् तव शैशवे बाल्ये नः मम नयनं चापल्यमेति प्राप्नोति। 'इण् गतौ' इत्यस्य लटः प्रथमैकवचनम् ॥ ३१ ॥

त्वच्छैशवं त्रिभुवनाद्भुतमित्यवैमि
यच्चापलं च मम वागविवादगम्यम्।
तत्किं करोमि विरणन्मुरलीविलास-
मुग्धं मुखाम्बुजमुदीक्षितुमीक्षणाभ्याम् ॥ ३२ ॥

त्वच्छैशवं तव बाल्यं त्रिभुवनस्य अद्भुतमाश्चर्यसंपादकमिति अवैमि मनसा जानामि। चापलं विषयादावासक्तित्वं यदस्ति तच्चाद्भुतमित्यवैमीति पूर्वेण संबन्धः। मम वाग्भिः अविवादं विवादाभावो यथा तथा, निर्विचिकित्समित्यर्थः। गम्यं प्राप्तम्। त्वच्छैशवादिकं मम वाग्व्यापारविषयभूतमित्यवैमीत्यर्थः। विरणन्ती विशेषेण ध्वनन्ती, सा चासौ मुरली च, तस्या विलासैर्गानविशेषैः मुग्धं सुन्दरं मुखाम्बुजम् ईक्षणाभ्यां नेत्राभ्यां सम्यग्द्रष्टुं किं करोमि किं कर्तव्यम्! तद्वदेति शेषः॥

पर्याचितामृतरसानि पदार्थभङ्गी-
फल्गूनि वल्गितविशालविलोचनानि।
बाल्याधिकानि मदवल्लभभाषितानि
भावे लुठन्ति सुदृशां तव जल्पितानि ॥ ३३ ॥

पर्याचितः स्रवन् अमृतस्य सुधाया रस इव रसो येषु तानि, पदार्थभङ्ग्यो मणिमुरगादिरचनाः फल्गु असारं येषु तानि, मणिमुर-

विशेषो यस्मिन्कर्मणि तद्यथा तथा यावत्कालं नोदेति नोत्पद्यते तावत्ततः पूर्वमेव मम चित्तधारा चक्षुर्द्वारा निर्गतान्तःकरणवृत्तिपरम्परा, तावकचन्द्रः त्वदीयमुखचन्द्रः । 'तवकममकावेकवचने' इति तावकादेशः । तस्य चन्द्रातपेन ज्योत्स्नया द्विगुणीकृता वृद्धिं प्राप्ता भवतु । अवश्यं त्वद्दर्शनेन भाव्यम्, अन्यथा ममानिर्वाह इति भावः ॥ ३७ ॥

यावन्न मे नरदशा दशमी दृशोऽपि
रन्ध्रादुदेति तिमिरीकृतसर्वभावा ।
लावण्यकेलिसदनं तव तावदेतु
लक्ष्म्या समुत्क्वणितवेणु मुखेन्दुबिम्बम् ॥

अतिमिराणि तिमिराणि तमांसि संपद्यमानाः कृतास्तिमिरीकृताः अभूततद्भावे च्विः । 'अस्य च्वौ' इतीकारः । सर्वभावाः समस्तपदार्था यया सा दशमी दशसंख्यापूरिका । मट्टित्वात् 'टिड्ढाणञ्—' इत्यादिना ङीप् । नराणां दशा नरदशा, अन्त्यावस्थेत्यर्थः । दृशो नयनस्य रन्ध्राच्छिद्रात्, नयनकुहरादित्यर्थः । यावत्कालं नोदेति नोत्पद्यते, तावत्तदानीमेव लक्ष्म्या सौन्दर्येण लावण्यस्य कान्तिविशेषस्य केलिसदनं लीलागृहम् । यद्वा लक्ष्म्या वेणुप्रणादादिसंपत्त्या सम्यगुत्पन्नमुत्क्वणितमुत्तानध्वनिविशेषो यस्य स तथोक्तो वेणुर्यस्य तत् तव मुखेन्दुबिम्बम् एतु प्राप्नोतु । चित्तधारेति पूर्वश्लोकादनुषज्यते । मम चित्तधारा मुखेन्दुबिम्बं प्राप्नोतित्यर्थः । अन्यथा निर्वाहाभावादवश्यं प्रत्यक्षेण भाव्यमिति भावः ॥ ३८ ॥

आलोललोचनविलोकितकेलिधारा-
नीराजिताग्रसरणैः करुणाम्बुराशेः ।

आर्द्राणि वेणुनिनदैः प्रतिनादपूरै-
राकर्णयामि मणिनूपुरशिञ्जितानि ॥ ३९ ॥

आलोले चञ्चले लोचने यासां तासां विलोकितानि दृष्टयः, तेषां केलि-धारा विलाससंततयः, ताभिर्नीराजिता अग्रसरणिः पुरोभागो यस्य तस्य । व्रजस्त्रीणां सदा तन्मुखदिदृक्षुत्वादिति भावः । करुणाम्बुराशेः कृपासमुद्रस्य कृष्णस्य प्रतिनादस्य प्रतिध्वनेः पूराः प्रवाहा येषां तैः । यद्वा प्रतिनादः शिञ्जितं तेन पूरैः पूर्णैः वेणुनिनादैः साकम् । 'वृद्धो यूना—' इति निर्देशात्सहादिप्रयोगाभावेऽपि तदर्थो लभ्यत इति भावः । आर्द्राणि रसवन्ति मणिनूपुरशिञ्जितानि मणिनूपुरध्वनिविशेषान् आकर्णयामि श्रोष्यामि । तथा कुर्विति भावः ॥ ३९ ॥

हे देव हे दयित हे जगदेकबन्धो
हे कृष्ण हे चपल हे करुणैकसिन्धो ।
हे नाथ हे रमण हे नयनाभिराम
हा हा कदा नु भवितासि पदं दृशोर्मे ॥४०॥

हे कृष्ण, मम दृशोर्नयनयोः पदं विषयभूतः कदा नु भवितासि भविष्यसि । लुण्मध्यमपुरुषैकवचनम् । हा हेति खेदे । नन्वप्रकाशमानस्वभावत्वादेव न प्रत्यक्षो भवामीत्याशङ्क्याह— हे देवेति । दीव्यति प्रकाशत इति व्युत्पत्त्या प्रकाशमानस्यैव देवत्वादिति भावः । ननु प्रकाशमानस्वभावत्वेऽपि मयि तव प्रीतेरभावान्न प्रत्यक्षोऽहमित्याशङ्क्याह— हे दयितेति । प्रीतिविषयस्यैव दयितत्वादिति भावः । तव मयि प्रीतौ सत्यामपि त्वयि मम प्रीतेरभावान्न प्रत्यक्षोऽहमित्याशङ्क्याह— हे जगदेकबन्धो

इति। तव जगदेकबन्धुत्वादहमपि जगदेकदेश इति कृत्वा मय्यपि स्नेहसद्भावात्प्रत्यक्षेण भाव्यमिति भावः । मयि त्वद्बान्धवे सत्यपि यस्य कस्यचित्प्रत्यक्षो भवामि न तवेत्याशङ्क्य तर्हि तव चापल्यं स्यादित्याह— हे चपलेति । चापल्यं दुःस्वभावः । ननु चापल्यादेव न प्रत्यक्षोऽहमित्याशङ्क्याह— हे करुणैकसिन्धो इति । चापल्यस्य स्वल्पत्वाद्दयाया आधिक्यात्प्रत्यक्षेण भाव्यमिति भावः । ननु दयाधिक्येऽपि बान्धवेऽपि विशेषबान्धवाभावान्न प्रत्यक्षोऽहमित्याशङ्क्याह— हे नाथेति । स्वस्वामिभावरूपविशेषसंबन्धस्य विद्यमानत्वात्प्रत्यक्षेण भाव्यमिति भावः । ननु बहुस्त्रीकस्य स्वस्वामिसंबन्धेऽपि कस्यांचित्प्रसादं नेतरस्याम्, तद्वच्च त्वयि न प्रसाद इत्याशङ्क्याह— हे रमणेति तव निरुपाधिकमैत्रस्वभावादेव मत्संतोषजनकप्रत्यक्षेण भाव्यमि भावः। ननु निरुपाधिकमैत्रस्वभावत्वेऽपि तव मनसो रमणमेवा न तु नयनयोरित्याशङ्क्याह— नयनाभिरामेति । नयनयोरतिप्रीतिक त्वादेव त्वत्प्रत्यक्षेण भाव्यमिति भावः ॥ ४० ॥

अमून्यधन्यानि दिनान्तराणि
हरे त्वदालोकनमन्तरेण ।
अनाथबन्धो करुणैकसिन्धो
हा हन्त हा हन्त कथं नयामि ॥ ४१ ॥

हे करुणैकसिन्धो दयासमुद्र, अनाथबन्धो हे कृष्ण, त्वदा त्वद्विषयकदर्शनमन्तरेण विहाय 'अन्तरान्तरेण—' इति द्विती अधन्यानि अकृतार्थानि अमूनि दिनान्तराणि कृष्णप्रत्यक्षरहित कथं केन प्रकारेण नयामि नेष्यामीत्यर्थः । हा हन्तेति खेदे । आ द्विर्भावः ॥ ४१ ॥

किमिह शृणुमः कस्य ब्रूमः कथं कृतमाशया
कथयत कथं धन्या मन्यामहे हृदयेशयम् ।
मधुरमधुरस्मेराकारे मनोनयनोत्सवे
कृपणकृपणा तृष्णा कृष्णे चिरं बत लम्बते ॥ ४२ ॥

मधुरमधुरः अत्यन्तसुन्दरः। आभीक्ष्ण्ये द्विरुक्तिः । कर्मधारयत्वात्सुब्लोपः। स्मेरः कान्तिमांश्च आकारः अवयवसंस्थानविशेषः यस्य तस्मिन्, मनश्च नयने च तेषामुत्सवः संतोषः। तत्कारणे तत्त्वमुपचारात्। तस्मिन्। मनोनयनसंतोषसंपादके इत्यर्थः। कृष्णे, कृपणकृपणा। प्रक्रिया पूर्ववत्। तृष्णा आशा चिरं चिरकालमारभ्य लम्बते अवलम्बनं कुरुते। आशया कथं कृतम्। आशा मां पीडयतीत्यर्थः। हे धन्याः कृतार्थाः, हृदयेशयं मनसि वर्तमानं श्रीकृष्णं कथं मन्यामहे पश्याम.? इह एतद्दर्शनार्थं कस्य कस्योपाध्यायस्य ब्रूमः विज्ञापनं कुर्मः? किं शृणुमः कस्य वेदान्तस्य श्रवणं कुर्मः? ब्रह्मसाक्षात्कारस्य सदुपाध्यायाध्यापितसद्वेदान्तश्रवणस्यासिद्धत्वादिति भाव.। कथयत वदत। बतेति खेदे। पाठान्तरमसमीचीनम् ॥ ४२ ॥

आभ्यां विलोचनाभ्या-
मम्बुजदललितलोचनं बालम् ।
द्वाभ्यामपि परिरब्धुं
दूरे मम हन्त दैवसामग्री ॥ ४३ ॥

आभ्यां पर्वतादिमहद्वस्तुदर्शनशक्ताभ्यां द्वाभ्यां द्वित्वसंख्यायुक्ताभ्यां विलोचनाभ्यां विशेषेण द्रष्टुं समर्थाभ्याम्। दोषशून्याभ्यामिति भावः।

अम्बुजदलललितलोचनं पद्मपत्रवत्सुन्दरनयनम्। अनेन विषयदोषोऽपि नास्तीत्युक्तम्। बालम् अर्भकमपि। इदमुपलक्षणम्। एकत्वात्कान्तमित्यपि बोध्यम्। परिरब्धुमालिङ्गितुम्; द्रष्टुमित्यर्थः। मम दैवसामग्री अदृष्टोद्बोधः दूरे। दृष्टोद्बोधो दूरे नास्तीत्यर्थः। हन्तेति खेदे। द्वाभ्यां मर्मर्याभ्यां स्वच्छैकवस्तुग्रहणाभावः अदृष्टोद्बोधाभावप्रयुक्तः, न तु दृष्टसामग्र्यभावप्रयुक्त इति भावः॥ ४३॥

अश्रान्तस्मितमरुणारुणाधरोष्ठं
हर्षार्द्रद्विगुणमनोज्ञवेणुगीतम्।
विभ्राम्यद्विपुलविलोचनार्धमुग्धं
वीक्षिष्ये तव वदनाम्बुजं कदा नु॥ ४४॥

अश्रान्तस्मित निरन्तरस्मितयुक्तमित्यर्थः। अरुणारुणः रक्तवस्तुसदृशः। 'प्रकारे गुणवचनस्य' इति सादृश्यार्थे द्विर्भावः। 'कर्मधारयवदुत्तरेषु' इति कर्मधारयवद्भावात्सुलोपः। अधरोष्ठो यस्य तत्। हर्षार्द्रं संतोषयुक्तम्, तच्च तत् द्विगुणमनोज्ञं अत्यर्थश्राव्यं वेणुगीतं यस्य तत्। विभ्राम्यता चञ्चलेन विपुलविलोचनयोरर्धेन। अत्रार्धशब्द एकदेशवाची, न तु समांशवाची। अत एवोत्तरनिपातः। मुग्धं सुन्दरम्। ईषन्निमीलितनयनाभ्यामतिसुन्दरमित्यर्थः। तव वदनाम्बुजं कदा नु वीक्षिष्ये द्रक्ष्यामि॥ ४४॥

लीलायताभ्यां रसशीतलाभ्यां
नीलारुणाभ्यां नयनाम्बुजाभ्याम्।
आलोकयेदद्भुतविभ्रमाभ्यां
काले कदा कारुणिकः किशोरः॥ ४५॥

कारुणिको दयाप्रधानः किशोरः बालकृष्णः लीलाभिः विलासैः आयताभ्यां दीर्घाभ्याम्, विलासयुक्ताभ्यामित्यर्थः। रसः शृङ्गारः अनुरागो वा तेन शीतलाभ्यां हृद्याभ्याम्, नीले च ते अरुणे च। कनीनिकाप्रदेशे नैल्यम् अपाङ्गप्रदेशे रक्तिमेति विभागः। ताभ्याम्, अद्भुता आश्चर्यसंपादका विभ्रमा विलासा ययोस्ताभ्यां नयनाम्बुजाभ्यां कदा काले। कदेत्यत्र किंशब्दार्थो विवक्षितः, न तु प्रत्ययार्थः। यद्वा काले कदा कस्मिन्क्षणे आलोकयेत् पश्येत्। मामिति शेषः॥ ४५॥

**बहुलचिकुरभारं बद्धपिञ्छावतंसं**
**चपलचपलनेत्रं चारुबिम्बाधरोष्ठम्।**
**मधुरमृदुलहासं मन्दरोदारलीलं**
**मृगयति नयनं मे मुग्धवेषं मुरारेः॥ ४६॥**

बहुलः अधिकः चिकुरभारः केशभारो यस्य तम्, बद्धः पिञ्छावतंसो येन तम्, चपलचपले इति आभीक्ष्ण्ये द्विर्भावः। कर्मधारयत्वात्सुब्लोपः। नेत्रे यस्य तम्, मधुरो हृद्यः मृदुलः कोमलश्च हासो यस्य तम्, मन्दरस्य पर्वतविशेषस्येव उदारलीला गम्भीरविलासाः यस्य तम्, अतिधैर्ययुक्तमित्यर्थः। मुरारेः कृष्णस्य मुग्धवेषं मे नयनं मृगयति अन्वेषणं करोति॥ ४६॥

**बहुलजलदच्छायाचोरं विलासभरालसं**
**मदशिखिशिखालीलोत्तंसं मनोज्ञमुखाम्बुजम्।**
**कमपि कमलापाङ्गोदग्रप्रसङ्गजगज्जडं**
**मधुरिमपरीपाकोद्रेकं वयं मृगयामहे॥ ४७॥**

अम्बुजदलललितलोचनं पद्मपत्रवत्सुन्दरनयनम्। अनेन विषयदोषोऽपि नास्तीत्युक्तम्। बालम् अर्भकमपि। इदमुपलक्षणम्। एकत्वात्कान्तामित्यपि बोध्यम्। परिरब्धुमालिङ्गितुम्; द्रष्टुमित्यर्थः। मम दैवसामग्री अदृष्टोद्बोधः दूरे। दृष्टोद्बोधो दूरे नास्तीत्यर्थः। हन्तेति खेदे। द्वाभ्यां समर्थाभ्यां स्वच्छैकवस्तुग्रहणाभावः अदृष्टोद्बोधाभावप्रयुक्तः, न तु दृष्टसामग्र्यभावप्रयुक्त इति भावः॥ ४३॥

अश्रान्तस्मितमरुणारुणाधरोष्ठं
हर्षार्द्रद्विगुणमनोज्ञवेणुगीतम्।
विभ्राम्यद्विपुलविलोचनार्धमुग्धं
वीक्षिष्ये तव वदनाम्बुजं कदा नु॥ ४४॥

अश्रान्तस्मितं निरन्तरस्मितयुक्तमित्यर्थः। अरुणारुणः रक्तवस्तुसदृशः। 'प्रकारे गुणवचनस्य' इति सादृश्यार्थे द्विर्भावः। 'कर्मधारयवदुत्तरेषु' इति कर्मधारयवद्भावात्सुलोपः। अधरोष्ठो यस्य तत्। हर्षार्द्रं संतोषयुक्तम्, तच्च तत् द्विगुणमनोज्ञं अत्यर्थश्राव्यं वेणुगीतं यस्य तत्। विभ्राम्यता चञ्चलेन विपुलविलोचनयोरर्धेन। अत्रार्धशब्द एकदेशवाची, न तु समांशवाची। अत एवोत्तरनिपातः। मुग्धं सुन्दरम्। ईषन्निमीलितनयनाभ्यामतिसुन्दरमित्यर्थः। तव वदनाम्बुजं कदा नु वीक्षिष्ये द्रक्ष्यामि॥ ४४॥

लीलायताभ्यां रसशीतलाभ्यां
नीलारुणाभ्यां नयनाम्बुजाभ्याम्।
आलोकयेदद्भुतविभ्रमाभ्यां
काले कदा कारुणिकः किशोरः॥ ४५॥

बहुलं जलं ददातीति बहुलजलदः तस्य चछाया कान्तिः नालिबाहुल्यादतिनीलरूपिणीत्यर्थः । तस्याश्चोरं स्तेनम्, नीलमेघसदृशमित्यर्थः । विलासा लीला एव भराः तैः अलसं मन्दीभूतम्, मद्युतशिखी मदशिखी तस्य शिखा सैव लीलोत्तंसः शेखरः कर्णपूरो वा यस्य तम् । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इत्यमरः । मनोज्ञं मञ्जुलं मुखाम्बुजं यस्य तम्, कमलमदपाङ्गयोरुदग्रेण शुकेन । कटाक्षमालेनेत्यर्थः । प्रसन्नः कृतार्थीभूतः जगत्सु जडः तुच्छपदार्थो यस्य तम्, कमपि इत्थमिति वक्तुमशक्यम्, मधुरिम्णां सौन्दर्याणां परीपाकः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति घमन्ते परे दीर्घः । तस्य उद्रेकः औत्कट्यम् । तं वयं मृगयामहे अन्वेषणं कुर्महे ॥ ४७ ॥

परामृश्यं दूरे परिषदि मुनीनां व्रजवधू-
दृशां दृश्यं शश्वत्त्रिभुवनमनोहारिवपुषम् ।
अनामृश्यं वाचामनिदमुदयानामपि कदा
दरीदृश्ये देवं दरदलितनीलोत्पलरुचिम् ॥ ४८ ॥

अयम् एतद्देशकालविशिष्टः उदयः उत्पत्तिः यासां ताः न भवन्तीति अनिदमुदयाः, प्रवाहानादय इत्यर्थः । तासां वाचामपि, वेदान्तवाग्भिरपीत्यर्थः । कृत्यान्तयोगात्कर्तरि तृतीयार्थे षष्ठी । अनामृश्यं भङ्गयादिकया प्रतिपादयितुमशक्यम् । तथा च श्रुतिः 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' इति । अत एव परिषदि नैमिशारण्यस्थलविशेषे, मुनीनाम् अधीतवेदान्तवाक्येषु ब्रह्मप्रतिपादकत्वं निश्चित्य तत्र युक्तिभिरनुचिन्तकानाम् । परामृश्यमित्यत्र अनिदमुदयानामपीत्यत्रत्यापिशब्दोऽनुषञ्जनीयः । तथा च परामृश्यमपि दूरे भवतीत्यर्थः । नन्वे-

तादृशः कथं तव दृश्यो भवेदित्याशङ्क्य वैपरीत्यस्यापि संभवादविरोध इत्याह— व्रजेत्यादिना । व्रजे गोष्ठे । 'गोष्ठाध्वनिवहा व्रजाः' इत्यमरः । वधूनां वेदान्तवाक्याध्ययनतत्तात्पर्यनिश्चयतदुपपत्तिचिन्तनरचितगोपवधूजनानामित्यर्थः । दृशां नयनैः । पूर्ववत्षष्ठी । दृश्यं द्रष्टुं योग्यम्, शश्वत् सदा त्रिभुवनस्य सकललोकजनस्य । भुवनशब्देन तत्रत्यजना लक्ष्यन्ते इति भावः । मनोहारि हृद्यं वपुः शरीरं यस्य तम्, दरदलितम् ईषद्विकसितं तच्च तत् नीलोत्पलं च तस्येव रुचिर्यस्य तं तत्संनिभं देवं कदा कस्मिन्समये दरीदृश्ये सम्यग्द्रक्ष्यामि 'विभाषा कदाकर्ह्योः' इति भविष्यति लट् । यङ्प्रयोग आदरातिशयद्योतनार्थः । दरदलितेति कान्तिसौष्ठवद्योतनार्थम् । शश्वत्त्रिभुवनेति सर्वातिशायिसौन्दर्यद्योतनार्थम् । व्रजेत्यादिः सौलभ्यद्योतनार्थः । वाचामनामृश्यमिति मुनीनां दूरे परामृश्यमिति च तद्विरोधद्योतनार्थम् । अदृष्टवशेन ज्ञायमानत्वाज्ञायमानत्वयोः संभवान्न विरोध इति ज्ञेयम् ॥ ४८ ॥

लीलाननाम्बुजमधीरमुदीक्षमाणं
नर्माणि वेणुविवरेषु निवेशयन्तम् ।
डोलायमाननयनं नयनाभिरामं
वन्दे कदा नु दयितं व्यतिलोकयिष्ये ॥ ४९ ॥

लीलायुतं विलासयुतम् अम्बुजवदाननं यस्य तम्, अधीरं चपलं यथा तथा उदीक्षमाणं पश्यन्तम्, वेणुविवरेषु सुषिरजन्यनादेषु नर्माणि गोपीभिः साकं कृतसंकेतान् निवेशयन्तम्, डोलायमाने ईषच्चपले नयने यस्य तम्, नयने अभिरमेते संतुष्यतः यस्मिन् तथोक्तम्, तन्नयनाह्लादजनकमित्यर्थः । दयितं प्रियं कदा नु व्यतिलोकयिष्ये मद्विषयक-

कृष्णदर्शनपूर्वकं कृष्णं द्रक्ष्यामि । कदा नु वन्दे नमस्कुर्वे ॥ ४९ ॥

> लग्नं मुहुर्मनसि लम्पटसंप्रदायि
> लेखावलेखिनि रसज्ञमनोज्ञवेषम् ।
> लज्जन्मृदुस्मितमधुस्नपिताधरांशु
> राकेन्दुलालितमुखेन्दु मुकुन्दबाल्यम् ॥ ५० ॥

रसज्ञः सारग्राही मनोज्ञः सुन्दरो वेषोऽलंकारो यस्य तत्, लज्जां भावयत्, न तु वस्तुतः । 'रज्यत्' इति पाठे समस्तपदम् । रज्यता अलंकुर्वता मृदुना कोमलेन मधुवत्स्मितेन क्षौद्रवन्मन्दहासेन स्नपिताः सिक्ताः अधरस्य अंशवः कान्तयो यस्य तत्, राका पूर्णिमाविशेषः तत्रेन्दुः परिपूर्णचन्द्र इत्यर्थः । तेन लालितः संमानितः मुखमेवेन्दुर्यस्य तत्, मुकुन्दबाल्यं श्रीकृष्णबालभावः लेखावलेखिनि सर्वदा कृष्णध्यानवशात्तदाकारचिन्तावशात्तदाकारचित्तवति मनसि । ममेति शेषः । मुहुः पुनःपुनः लग्नं प्रतीयमानं सत, लम्पट आयासः तं संप्रदातुं शीलमस्यास्तीति तत् । भवतीति शेषः । प्रत्यक्षमजनयित्वा आयासजनकं भवतीत्यर्थः ॥ ५० ॥

> अहिमकरकरनिकरमृदुमुदितलक्ष्मी-
> सरसतरसरसिरुहसदृशदृशि देवे ।
> व्रजयुवतिरतिकलहविजयनिजलीला-
> मदमुदितवदनशशिमधुरिमणि लीये ॥ ५१ ॥

अहिमकरः सूर्यः तस्य कराः किरणाः तेषां निकरः समूहः तस्य मृदुमुदितम् ईषत्स्पर्शमुदितम् । अत्र भावे क्तः । तेन लक्ष्म्या कान्त्या

द्वयोः सरसयोरतिशयेन सरसं सरसतरम् । 'द्विवचनविभज्य-' इति तरप् । तच्च तत् सरसिरुहं पद्मं च । 'तत्पुरुषे कृति-' इति सप्तम्या अलुक् । तस्य सदृशौ दृशौ नेत्रे यस्य तस्मिन् देवे श्रीकृष्णे व्रजयुवतीनां नन्दव्रजघोषीणां रतिरेव कलहः तत्र विजयः तेन निजः स्वीयः लीलामदः विलासयुतमदः तेन मुदितस्य संतुष्टस्य वदनं शशीव तस्य मधुरिमाणि सौन्दर्ये लीये तिरोभवामि । देवे इति मधुरिमाणि इति च सप्तम्या वैयधिकरण्यं ज्ञेयम् । अवश्यं कृष्णमुखसौन्दर्यदर्शनेन भाव्यमिति भावः ॥ ५१ ॥

**करकमलदलदलितललिततरवंशी-**
**कलनिनदगलदमृतघनसरसि देवे ।**
**सहजरसभरभरितदरहसितवीथी-**
**सततवहदधरमणिमधुरिमणि लीये ॥ ५२ ॥**

करकमलयोर्दलानि अङ्गुलयः तैः दलितः भिन्नः । स्वरभेदं प्राप्त इत्यर्थः । स चासौ ललिततरः भव्यतरः स चासौ वंशीकलनिनदः वेणोरव्यक्तमधुरध्वनिः तेन गलत्, अव्यक्तमधुरध्वनीनामाधिक्येनात्र स्थातुमशक्यम् इतो यत्र कुत्रचिद्गन्तव्यमिति निःसरत् अमृतस्य सुधायाः घनसरः महाह्रदो यस्य तस्मिन्, सहजः स्वाभाविकः रस एव भरः तेन । स्वतःसिद्धरसरूपभरेणेत्यर्थः । भरितानि भारवन्ति । स्वभावतो रसयुक्तानीत्यर्थः । तथोक्तानि दरहसितानि, मन्दस्मितानीत्यर्थः । तेषां वीथ्यः पङ्क्तयः ताः सततं वहन् अधरमणेः मधुरिमा यस्य तस्मिन् देवे लीये लीनो भवामि । अवश्यं कृष्णदर्शनेन भाव्यमिति भावः ॥ ५२ ॥

कुसुमशरशरसमरकुपितमदगोपी-
कुचकलशघुसृणरसलसदुरसि देवे
मदलुलितमृदुहसितमुषितशशिशोभा
मुहुरधिकमुखकमलमधुरिमणि लीये ॥ ५३ ॥

कुसुमशरो मन्मथः तस्य शराः पुष्पाणि तैः समरः युद्धम्, पुष्पविहार इत्यर्थः । तत्र कुपितानां कोपयुक्तानां मदगोपीनां मत्तगोपस्त्रीणां कुचौ कलशाविव तयोः घुसृणम् अङ्गरागविशेषः तस्य रसो द्रवः तेन लसत् प्रकाशमानम् उरो वक्षो, यस्य तस्मिन्, मदेन लुलितं विलुठत् । कर्तरि क्तः । तच्च तत् मृदुहसितं मन्दस्मितं च तेन मुषितया चौर्येण गृहीतया शशिनः चन्द्रस्य शोभया । ज्योत्स्नातुल्यमन्दहसितेनेत्यर्थः । मुहुरधिकः अत्यर्थमधिकः मुखकमलस्य मधुरिमा सौन्दर्यं यस्य तस्मिन् देवे श्रीकृष्णे लीये लीनो भवामि ॥ ५३ ॥

आनम्रामसितभ्रुवोरुपचितामक्षीणपक्ष्माङ्कुरे-
ष्वालोलामनुरागिणोर्नयनयोरार्द्रां मृदौ जल्पिते ।
आताम्रामधरामृते मदकलामम्लानवंशीस्वने-
ष्वाशास्ते मम लोचनं व्रजशिशोर्मूर्तिं जगन्मोहनीम् ॥

असिते कृष्णवर्णे ते च ते भ्रुवौ च तयोः आनम्राम् । वक्रभ्रूयुक्तामित्यर्थः । अक्षीणेषु पक्ष्माङ्कुरेषु उपचितां वृद्धिमतीम् । वृद्धिमदविरलपक्ष्मयुक्तामित्यर्थः । अनुरागिणोर्दयावतोर्नयनयोः आलोलां चञ्चलाम् । चञ्चलनयनयुक्तामित्यर्थः । मृदौ श्राव्ये । 'तृतीयादिषु भाषितपुंस्कम्—' इति पुंवत्त्वान्न नुम् । जल्पिते वचसि आर्द्रां रसवतीम् । रसवद्वाग्विशेष-

युक्तामित्यर्थः । अधरामृते आताम्रामारक्ताम् । आरक्ताधरयुक्तामित्यर्थः । अम्लानवंशीस्वनेषु उच्चैस्तरवेणुगानेषु मदेन कलामव्यक्तमधुराम् । अव्यक्तमधुरवेणुगानयुक्तामित्यर्थः । व्रजशिशोः कृष्णस्य जगन्मोहयतीति जगन्मोहनी ताम् । जगन्मोहसंपादिकामित्यर्थः । मूर्तिं शरीरं मम लोचनमाशास्ते प्रार्थयते ॥ ५४ ॥

नन्वितरेषां ब्रह्मरुद्रादीनां विद्यमानत्वात्तद्दर्शनं परित्यज्य कृष्णदर्शनमेव किमिति प्रार्थयस इत्याशङ्क्याह—

> तत्कैशोरं तच्च वक्त्रारविन्दं
> तत्कारुण्यं ते च लीलाकटाक्षाः ।
> तत्सौन्दर्यं सा च मन्दस्मितश्रीः
> सत्यं सत्यं दुर्लभं दैवतेषु ॥ ५५ ॥

तत् मम मनसि प्रतीयमानं किशोरस्य भावः कैशोरं बाल्यम्, तत् मच्चेतसि प्रतीयमानं वक्त्रारविन्दं मुखकमलं च । एवमेवान्यत्रतच्छब्दाः सर्वे मनसि प्रतीयमानार्थका वेदितव्याः । तत्कारुण्यं दया च, ते च लीलाकटाक्षाः लीलासंयुताः कटाक्षा दृष्टयश्च, तत्सौन्दर्यं च, सा मन्दस्मितश्रीश्च दैवतेषु ब्रह्मरुद्रादिषु दुर्लभम्, नास्तीत्यर्थः । तदेव द्रढयति— सत्यं सत्यमिति । कृष्णस्य बाल्यादिकं यदस्ति तत्तद्ब्रह्मादिषु नास्ति । ब्रह्मणश्चतुर्मुखत्वाद्रुद्रस्य विरूपाक्षत्वात्कुमारस्य च षण्मुखत्वादिति भावः ॥ ५५ ॥

ननु कृष्णस्य सौन्दर्यवत्त्वेऽपि अनुपकारित्वात्तद्दर्शनमफलमित्याशङ्क्य तदुपकारित्वमपि दृष्टमित्याह—

**विश्वोपप्लवशमनैकबद्धदीक्षं**
**विश्वासस्तबकितचेतसां जनानाम् ।**
**पश्यामः प्रतिनवकान्तिकन्दलार्द्रं**
**पश्यामः पथि पथि शैशवं मुरारेः ॥ ५६ ॥**

अस्मिन्पद्ये अपिशब्दोऽध्याहार्यः । एवं च मुरारेः कृष्णस्य शैशवं बाल्यं प्रतिनवैः प्रतिक्षणं नूतनैः कान्तिकन्दलैः कान्त्यङ्कुरैः आर्द्रं सरसं पश्यामः मनसा जानीमः । विश्वासेन स्तबकितानि गुच्छवन्ति । विश्वासगुम्फानीत्यर्थः । चेतांसि चित्तानि येषां तेषां जनानां गोपालादिजनानां पथि पथि तत्र तत्र देशेषु । 'नित्यवीप्सयोः' इति वीप्सार्थे द्विर्भावः । विश्वोपप्लवाः सर्वोपद्रवाः बकतृणभासुरादिभिः क्रियमाणा अग्निदाहादयश्चेत्यर्थः । तेषां शमनं शान्तिः तत्र एकम् । अत्र एकशब्दः केवलार्थकः । विश्वोपद्रवशमन एवेत्यर्थः । 'एके मुख्यान्यकेवलाः' इत्यमरः । यद्वा विश्वोपप्लवशमनम् एकं मुख्यं यथा तथेति मुख्यार्थको वा एकशब्दः । बद्धा दीक्षा येन तदपि पश्यामः मनसा जानीमः । सौन्दर्यं भक्तजनोपकारकत्वं च कृष्णस्यैवेति तद्दर्शनमपेक्षणीयमेवेति भावः ॥ ५६ ॥

ननु तव मनसि परिवर्तमानः श्रीकृष्ण उपकर्तुमसमर्थः बालकत्वादित्याशङ्क्य बाल्यमारोपितं न स्वाभाविकमित्याह—

**पादौ पादविनिर्जिताम्बुजवनौ पद्मालयालंकृतौ**
**पाणी वेणुविनोदनप्रणयिनौ पर्याप्तशिल्पश्रियौ ।**
**बाहू दोहदभाजनं मृगदृशां माधुर्यधारा गिरो**
**वक्त्रं वाग्विषयातिलङ्घितमहो बालं किमेतन्महः ॥**

आस्मिन्पद्ये यस्येत्यध्याहर्तव्यम्। एवं च पादेन अंशेन विनिर्जितानि अम्बुजवनानि याभ्यां तौ यस्य श्रीकृष्णस्य पादौ पद्मालयया लक्ष्म्या अलंकृतौ गन्धपुष्पादिभिरभ्यर्च्यमानौ। 'पद्मालयालम्बितौ' इति पाठे तया मृदिताविल्यर्थः। वेणुविनोदनं वेणुगानकरणं तत्र प्रणयिनौ प्रेमवन्तौ यस्य कृष्णस्य पाणी हस्तौ पर्याप्ता शिल्पस्य वेणुनादप्रभेद-करणसामर्थ्यस्य श्रीः संपद्ययोस्तौ। यस्य कृष्णस्य बाहू भुजौ मृगदृशां स्त्रीणां दोहदस्य अकालेऽप्यार्तवसंपादकवस्तुविशेषस्य भाजनं पात्रम्। बालिकानामपि स्पर्शमात्रेण प्रौढिमसंपादकाविल्यर्थः। गिरः वाचः माधु-र्यस्य रसविशेषस्य धाराः स्रवद्बिन्दवो यासां ताः। यस्य कृष्णस्य वक्त्रं वाग्विषयान् वक्तुं शक्यपदार्थान् अतिलङ्घितमतिक्रम्य वर्तमानम्। वाचा वक्तुमशक्यसुन्दरमिलर्थः। अस्मिन्पक्षे अहो इति खेदे। अति-लङ्घितं महस्तेजो यस्येति बहुव्रीहिर्वा। एतन्महः एतादृशं तेजः बाले किम्? बाले न भवतीत्यर्थः॥ ५७॥

पुनस्तत्सौन्दर्यमेव स्तौति—

**बर्हं नाम विभूषणं बहुमतं वेषाय शेषैरलं**
**वक्त्रं द्वित्रविशेषकान्तिलहरीविन्यासधन्याधरम्।**
**शीलैरल्पधियामगम्यविभवैः शृङ्गारभङ्गीमयं**
**चक्रं चित्रपदो विचित्रितमहो चित्रं विचित्रं महः॥**

वेषाय अलंकाराय शेषैः इतरभूषणानि अलं तिष्ठन्तु। वारणार्थकालं-शब्दयोगाद्वारणार्थयोगे तृतीया। वेषाय बर्हं नाम पिञ्छमिति प्रसिद्धं विभूषणं बहुमतम् अङ्गीकृतम्। अनेन भूषणानि परित्यज्याभूषणं भूषणत्वेन स्वीकृतमिति कृत्वा स्वतःसिद्धं सौन्दर्यमिति प्रतीयते। वक्त्रं

मुखं द्वौ वा त्रयो वा द्वित्राः । 'संख्ययाव्यय—' इत्यादिना समासः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् । टिलोपः । ते च ते विशेषाः चन्दनकस्तूर्यादिना रचिततिलकविशेषाः तेषां कान्तयः तासां लहरी आधिक्यं तस्य विन्यासः स्थितिर्यस्य तत् तथ तत् धन्यो हृद्यः अधरः अधरोष्ठो यस्य तच । द्वित्रविशेषकान्तिलहरीविन्यासेत्यनेन स्वल्पतिलकेनैव युक्तं मुखमित्युक्तत्वात्स्वतःसिद्धं मुखसौन्दर्यमित्युक्तम् । अल्पधियां स्थूलबुद्धिभिः । कृत्यानां कर्तरि वेति षष्ठी । अगम्यविभवैः अप्राप्तैश्वर्यैः शीलैः स्वभावैः शृङ्गारभङ्गीमयं राशीकृतशृङ्गाररसवर्द्धिष्णुमानमित्यर्थः । महः तेजः अहो चित्रमाश्चर्यम् । तदेवातिशयेनाह—विचित्रितमित्यादिना ॥ ५८ ॥

अग्रे समग्रयति कामपि केलिलक्ष्मी-
मन्यासु दिक्ष्वपि विलोचनमेव साक्षी ।
हा हन्त हस्तपथदूरमहो किमेत-
दासीत्किशोरमयमम्ब जगत्त्रयं मे ॥ ५९ ॥

हस्तस्य पन्थाः हस्तपथः । हस्तप्रसारणमिति यावत् । 'ऋक्पूरब्धूः—' इत्यप्रत्ययः । टिलोपः । तस्य दूरम् । यथा हस्तेन ग्रहीतुमशक्यं तथेत्यर्थः । अग्रे मत्पुरतः कामपि इत्थमिति वक्तुमशक्याम् केलिर्विहारः तस्य लक्ष्मीं संपत्तिं समग्रयति समग्रं करोति । तत्करोतिण्यन्ताल्लट् । अन्यासु दिक्ष्वपि केलिलक्ष्मीं समग्रयतीत्यनुषङ्गः । अत्र किं प्रमाणमित्याशङ्क्य चक्षुरेव प्रमाणमित्याह—विलोचनमिति । विलोचनमेव नयनमेव साक्षी प्रमाणमित्यर्थः । हा हन्तेति हर्षे । 'हन्त हर्षानुकम्पयोः' इत्यमरः । हे अम्ब, जगत्त्रयं मे मम किशोरमयमासीत् । किम् एतज्जगत्त्रयस्य किशोरमयत्वम् । अहो आश्चर्यम् ॥ ५९ ॥

चिकुरं बहुलं विरलं भ्रमरं
मृदुलं वचनं विपुलं नयनम् ।
अधरं मधुरं ललितं वदनं
चपलं चरितं च कदानुभवे ॥ ६० ॥

अस्मिन् श्लोके 'कदानुभवे' इति पाठे कृष्णस्येत्यध्याहार्यम् । 'कदा नु विभोः' इति पाठे पश्यामीति । एवं च कृष्णस्य बहुलमविरलान् चिकुरं कुन्तलानित्यर्थः । जातावेकवचनम् । विरलं सान्द्रतारहितान् भ्रमरं चूर्णकुन्तलान् । अत्रापि जातावेकवचनम् । मृदुलं कोमलानि वचनं वचनानि । अत्रापि पूर्ववदेकवचनम् । मधुरमधुरम्, ललितं वदनम्, चपलं चरितं च वर्तमानं कदा कस्मिन्काले अनुभवे अनुभविष्यामि, द्रक्ष्यामीत्यर्थः । उपसर्गवशादकर्मका अपि सकर्मका भवन्ति । 'भू प्राप्तौ आत्मनेपदे च' इति रामचन्द्राचार्यैरुक्तत्वात्सकर्मकत्वमात्मनेपदत्वं च । अत्र प्राप्तिर्विवक्षितेति न कोऽपि विरोधः । 'विभाषा कदाकर्ह्योः' इति भविष्यति लट् ॥ ६० ॥

परिपालय नः कृपालये-
त्यसकृज्जल्पितमात्मबान्धवः ।
मुरलीमृदुलस्वनान्तरे
विभुराकर्णयिता कदा नु नः ॥ ६१ ॥

हे कृपालय दयावन्, नः अस्मान् परिपालय रक्ष इत्येवंरूपं नः अस्माकम् असकृज्जल्पितं बहुवारमुक्तं वचनविशेषं विभुः श्रीकृष्णः आत्मबान्धवः मम बन्धुभूतः सन् । 'आर्तबान्धवः' इति पाठे

आर्तानां पीडितानां बान्धवः सखेत्यर्थः । मुरलीमृदुलस्वनान्तरे वेणुकोमलगानमृदुलस्वनान्तरे तन्मध्ये कदा नु आकर्णयिता श्रोष्यति ॥ ६१ ॥

कदा नु कस्यां नु विपद्दशायां
कैशोरगन्धिः करुणाम्बुधिर्नः ।
विलोचनाभ्यां विपुलायताभ्यां
व्यालोकयिष्यन्विषयीकरोति ॥ ६२ ॥

कस्यां विपद्दशायां नु । नुः प्रश्नार्थकः । कैशोरं बाल्यमस्ति स्वल्पमस्मिन्निति कैशोरगन्धिः । 'अल्पाख्यायाम्' इति गन्धस्येदादेशः । करुणाम्बुधिः दयासमुद्र, श्रीकृष्ण इत्यर्थः । विपुले विस्तृते च ते आयते च दीर्घे च, ताभ्यां लोचनाभ्यां व्यालोकयिष्यन्, कदा नु विषयीकरोति अविषया विषयाः संपद्यन्ते तान्करोति । अभूततद्भावे च्विः । 'अस्य च्वौ' इत्यकारस्येकारः ॥ ६२ ॥

मधुरमधरबिम्बे मञ्जुलं मन्दहासे
शिशिरममृतनादे शीतलं दृष्टिपाते ।
विपुलमरुणनेत्रे विश्रुतं वेणुनादे
मरकतमणिनीलं बालमालोकये नु ॥ ६३ ॥

अधरबिम्बे मधुरम्, मधुराधरयुक्तमित्यर्थः । मन्दहासे मञ्जुलम्, सुन्दरमन्दहासयुक्तमित्यर्थः । अमृतनादे अमृतवद्द्रियमाने वचसि शिशिर शीतलम्, अमृततुल्यशीतलवचोयुक्तमित्यर्थः । दृष्टिपाते ईक्षणे शीतलम्, शीतलदृष्टियुक्तमित्यर्थः । अरुणनेत्रे विपुलं विस्तृतम्, विस्तृतारुणनयनमित्यर्थः । वेणुनादे विश्रुतं विशेषेण श्रूयमाणम्, प्रसिद्धवेणुगानयुक्तमि-

त्यर्थः। मरकतमणिवत् नीलं बालम् आलोकये नु। 'नुः प्रश्ने पृच्छायां विकल्पे च' इत्यमरः॥ ६३॥

नन्वदृष्टपरिपाको यदा तदा कृष्णसाक्षात्कारो भवेत्, किमिदानीं तृषायाचेतेत्याशङ्क्य मम तावत्पर्यन्तं किं कर्तव्यमित्याह—

> माधुर्यादपि मधुरं
> मन्मथतातस्य किमपि कैशोरम्।
> चापल्यादपि चपलं
> चेतो मम हरति किं कुर्मः॥ ६४॥

माधुर्यादपि सकलजनसिद्धसौन्दर्यादपि किमपि इत्थमिति वक्तुमशक्यं मधुरं सुन्दरम्, चापल्यादपि लोकसिद्धचापल्यादपि। अत्रापि किमपीत्यनुषञ्जनीयम्। किमपि निर्वक्तुमशक्यं चपलं चञ्चलम्, मन्मथतातस्य प्रद्युम्नजनकस्य श्रीकृष्णस्येत्यर्थः। कैशोरं बाल्यं मम चेतो हरति। किं कुर्मः? हन्तेति खेदे॥ ६४॥

> वक्षःस्थले च विपुलं नयनोत्पले च
> मन्दस्मिते च मृदुलं मदजल्पिते च।
> बिम्बाधरे च मधुरं मुरलीरवे च
> बालं विलासनिधिमाकलये कदा नु॥ ६५॥

वक्षःस्थले उरःप्रदेशे च नयनमुत्पलमिव तस्मिंश्च विपुलं विस्तृतम्, विशालवक्षोनयनमित्यर्थः। बिम्बाधरे च मुरलीरवे च वेणुगाने च मधुरम्, हृद्यबिम्बाधरवेणुगानमित्यर्थः। विलासनिधिं सकलविनोदालयम्, बालं कदा आलोकये नु। प्रश्नार्थको नुशब्दः॥ ६५॥

चक्षुषि दूरतो बालभावेन कृष्णे प्रतीयमाने विकल्पयति

मारः स्वयं नु मधुरद्युतिमण्डलं नु
माधुर्यमेव नु मनोनयनामृतं नु ।
वाणीमृजा नु मम जीवितवल्लभो नु
बालोऽयमभ्युदयते मम लोचनाय ॥ ६६ ॥

मम लोचनाय बालः अभ्युदयते आविर्भवति । अयं बालः म स्वयं नु मन्मथ एव वा । मधुराणां सौन्दर्याणां द्युतयः तासां मण्डलं नु समूहो वा । यद्वा मधुरा हृद्याः द्युतयो यस्य स तथोक्तः चन्द्र इत्यर्थः । तस्य मण्डलं नु बिम्बं नु । माधुर्यमेव नु सौन्दर्यमेव वा । मनश्च नयने च तेषाममृतं नु सुधा वा । ममशब्दो मध्यमणिन्यायेन योजनीयः । एवं च मम वाणीमृजा नु वाचां परिशुद्धिर्वा । 'वेणीमृजा नु' इति पाठे तु वेणीनां जटानां मृजा नु शुद्धिर्नु, मम जटामोचकदीक्षान्तो वेत्यर्थः । 'वेणीसुधा नु' इति पाठे तु प्रवाहभूतामृतवेणी वेत्यर्थः । मम जीवितवल्लभो नु प्राणनाथो वा । मम निर्धारणं नास्तीत्यर्थः ॥ ६६ ॥

आर्द्रावलोकितधरापरिणद्धनेत्र
माविष्कृतास्मितसुधामधुराधरोष्ठम् ।
आद्यं पुमांसमवतंसितबर्हिबर्ह-
मालोकयन्ति कृतिनः कृतपुण्यपुञ्जाः ॥ ६७॥

आर्द्राणि सरसानि अवलोकितानि दर्शनानि ययोस्ते धरायां भुवि परिणद्धे प्रविष्टे मविशाले नेत्रे यस्य तम्, आविष्कृत प्रकाशितं तच तत्

स्मितं च तदेव सुधा तया मधुरः अधरोष्ठो यस्य तम्, अवतंसितं शेखरीकृतम् । अवतंसशब्दात्तत्करोतिण्यन्तात्कर्मणि क्तः । 'निष्ठायां सेटि' इति णेर्लोपः । बर्हिबर्हं पिञ्छं येन तम्, आद्यं जगत्कारणभूतं पुमांसं श्रीकृष्णमित्यर्थः । कृतः पुण्यपुञ्जः पुण्यसमूहो यैस्ते कृतिनः विद्वांसः आलोकयन्ति पश्यन्ति ॥ ६७ ॥

पुनर्विमृशन्नाह—

बालोऽयमालोलविलोचनेन
वक्त्रेण चित्रीकृतदिङ्मुखेन ।
वेषेण घोषोचितभूषणेन
मुग्धेन दुग्धे नयनोत्सवं नः ॥ ६८ ॥

घोषस्य व्रजस्य उचितानि भूषणानि यस्य तेन वेषेण अलंकारेण हेतुना, मुग्धेन सुन्दरेण, आलोले ईषच्चञ्चले विलोचने यस्य तेन, अचित्राणि चित्राणि संपद्यमानानि कृतानि चित्रीकृतानि, चित्रयुक्तानि कृतानीत्यर्थः । दिशां मुखानि येन तेन । दिङ्मुखेषु चित्रवद्दृश्यमानेनेत्यर्थः । वक्त्रेण मुखेन अयं बालः नः अस्माकं नयनोत्सवं चक्षुषोः संतोषं दुग्धे संपादयति ॥ ६८ ॥

आन्दोलिताग्रभुजमाकुलनेत्रलील-
मार्द्रस्मितं च वदनाम्बुजचन्द्रबिम्बम् ।
शिञ्जानभूषणशतं शिखिपिञ्छमौलि
शीतं त्रिलोकनरसायनमभ्युपैति ॥ ६९ ॥

आन्दोलितः ईषत्कम्पितः अग्रभुजः भुजाग्रं येन तत्, आकुलाञ्चितम्यमानाः नेत्रलीला नयनविलासाः यस्य तत्, आर्द्रस्मितं सरसस्मितम्, 'आवि-स्मितम्' इति पाठे आविर्भूतस्मितमित्यर्थः। मदनमेव अम्बुजं तच्चन्द्रबिम्बमिव यस्य तत्, शिञ्जान ध्वनियुक्तं भूषणशतं यस्य तत्, शिखिपिञ्छ मौलौ यस्य तत्, शीतं प्रेक्षकजनचक्षुःशीतलम्, विलोचनरसायनं नेत्रलेह्यं श्रीकृष्णाख्यमित्यर्थः। अभ्युपैति आभिमुख्येन एति। मामिति शेषः ॥ ६९ ॥

शिशुपालबालपरिषद्विभूषण
शिशुरेव शीतलविलोललोचनम् ।
मृदुलस्मितार्द्रवदनेन्दुसंपदा
मदयन्मदीयहृदयं विगाहते ॥ ७० ॥

शिशुपालबाला वत्सपालका बालाः तेषां परिषत्समूहः तस्या विभूषणमलंकारभूतम्। 'वेदाः प्रमाणम्' इतिवल्लिङ्गनपुंसकत्वान्न दोषः। '—विभूषणः' इति पाठे विभूषणानीव विभूषणानि यस्येति बहुव्रीहिः। शीतले जनरक्षके विलोले चञ्चले लोचने यस्य, एष शिशुः मृदुलस्मितं कोमलहासः तेन आर्द्रया सरसया वदनमिन्दुरिव तस्य संपदा समृद्ध्या ममेदं मदीयम्, तच्च तत् हृदयं च मदयन्मदवत्कुर्वन्। मतुबन्तान्मदशब्दात्तत्करोतिणेरिष्ठवद्भावान्मतुब्लोपे सति णेर्गुणावादेशयोः शतरि मदयन्निति रूपसिद्धिः। विगाहते आयाति ॥ ७० ॥

इदं पुरोवर्ति वस्तु किं वेति उद्दिश्य निश्चिनोति—

किमिदमधरवीथीक्लृप्तवंशीनिनादं
किरति नयनयोर्नः कामपि प्रेमधाराम् ।

म
तदिदमपुरवीथीदुर्लभं वल्लभं न-
स्त्रिभुवनभजनीयं दैवतं जीवितं च ॥ ७१ ॥

इदं पुरोवर्ति वस्तु, अधरवीथी अधरप्रदेशः तत्र वल्लभाया वंश्या वेणोर्निनादो यस्य तत्, नः अस्माकं नयनयोः कामपि इयमिति वक्तुमशक्यां प्रेमधारां स्नेहप्रवाहं किरति विक्षिपति, मम नयनयोरत्यन्तप्रीतिं संपादयतीत्यर्थः। इदं किमिति संशयः। निश्चिनोति—तदित्यादिना। इदं नः अस्माकं वल्लभं प्रियं जीवितं प्राणभूतम्, अमरवीथी स्वर्गवीथी तत्र दुर्लभं दुःखेन प्राप्तुं शक्यम्। 'ईषद्दुःसुषु—' इत्यादिना खल्। स्वर्गे प्राप्तुमशक्यमित्यर्थः। त्रिभुवनभजनीयं सकललोकसेव्यं दैवतं तदिति निश्चयः॥ ७१॥

तदिदमुपनतं तमालनीलं
तरलविलोचनतारकाभिरामम्।
मुदितमुदितवक्त्रचन्द्रबिम्बं
मुखरितवेणुविलासजीवितं मे ॥ ७२ ॥

तमालस्तापिच्छः वृक्षविशेषः। 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः। तद्वन्नीलम्। 'उपमानानि सामान्यवचनैः' इति समासः। तरलाभ्यां चञ्चलाभ्यां विलोचनतारकाभ्यां कनीनिकाभ्यामभिरामं सुन्दरम्, मुदितमुदितम् अत्यन्तसंतुष्टम्। 'आभीक्ष्ण्ये च' इति वक्तव्यातिशयार्थे द्विर्भावः। कर्मधारयत्वात्सुब्लोपः। वक्त्रं चन्द्रबिम्बमिव यस्य तत्, मुखरितो वेणुः तस्य विलासाः स्वरविशेषाः तेषां जीवितं प्राणभूतम्, वेणुगानविशेषाणां स्वरास्यसंपादकमित्यर्थः। तदिदं कृष्णाख्यं वस्तु, मे मम उपनतम् आभिमुख्येनागतं प्रसन्नमभूदित्यर्थः॥

चापल्यसीम चपलानुभवैकसीम
चातुर्यसीम चतुराननशिल्पसीम ।
सौरभ्यसीम सकलाद्भुतकेलिसीम
सौभाग्यसीम तदिदं व्रजभाग्यसीम ॥ ७३ ॥

चापल्यानां दौर्जन्यानां सीम उत्तरावधिः । अत्रैव दौर्जन्यं नान्यत्रेत्यर्थः । चपलानुभवस्य लक्ष्मीभोगस्य एकं मुख्यं तच्च तत्सीम च । अत्रैव लक्ष्मीभोगो नान्यत्रेत्यर्थः । चातुर्याणां चमत्काराणां सीम । सकलचमत्कारा अत्रैव नान्यत्रेत्यर्थः । चतुराननस्य ब्रह्मणः शिल्पं चातुर्यं तस्य सीम । कमलासनहस्तकौशलमत्रैव पर्याप्तं नान्यत्रेत्यर्थः । सौरभ्यं परिमलविशेषः तस्य सीम । परिमलमत्रैव नान्यत्रेत्यर्थः । सकलाः समस्ताः ताश्च ताः अद्भुतकेलयः आश्चर्यविहाराश्च तासां सीम । अत्रैवात्यद्भुतविहारा नान्यत्र कुत्रापीत्यर्थः । सौभाग्यस्य सौन्दर्यस्य सीम । अत्रत्यं सौन्दर्यं न कुत्रापीत्यर्थः । व्रजभाग्यस्य व्रजजनादृष्टफलस्य सीम उत्तरावधिः । व्रजजनभाग्यमिदमेव नान्यदिति भावः । एतादृशं वस्तु यदस्ति तत्प्रसिद्धं कृष्णाख्यं वस्तु इदं प्राप्तम्, आगतमित्यर्थः । सीमशब्दस्य नपुंसकप्रयोगो निघण्ट्वन्तरेषु मृग्यः । 'दुर्गमे मार्गसीम्नि' इत्यादिस्थलेषु नपुंसकत्वाद्वा साधुत्वं विज्ञेयम् ॥ ७३ ॥

माधुर्येण द्विगुणशिशिरं वक्त्रचन्द्रं वहन्ती
वंशीवीथीविगलदमृतस्रोतसा सेचयन्ती ।
मद्वाणीनां विहरणपदं मत्तसौभाग्यभाजां
मत्पुण्यानां परिणतिरहो नेत्रयोः संनिधत्ते ॥

मद्राणीनां मद्रास्थानां विहरणं विहारः । भावे ल्युट् । तस्य पदं विषयभूतम्, मस्तसौभाग्यम् अविकलसौन्दर्यं भजन्त इति भाजः तेषाम् । 'भजो ण्विः' इति ण्विप्रत्ययः । श्रेष्ठानामित्यर्थः । मत्पुण्यानां मदृष्टानां परिणतिः परिपाकभूतः कृष्णः माधुर्येण सौन्दर्येण द्विगुणशिशिरम् अत्याह्लादसंपादकं वक्त्रं चन्द्रमिव वक्त्रमेव चन्द्रमिति वा वहन्ती । 'न लोक—' इत्यादिना षष्ठीप्रतिषेधः । वंश एव वंशी । 'जातेरस्त्री—' इत्यादिना स्त्रीत्वविवक्षायां ङीप् । वेणुः, तस्या वीथी सुषिरपङ्क्तिः तस्या विगलता अमृतस्रोतसा, अमृततुल्यगानप्रवाहेणेत्यर्थः । यद्वा गानरूपामृतप्रवाहेणेत्यर्थः । सेचयन्ती, श्रोत्रयोः सुखं संपादयन्तीत्यर्थः । एवंभूता सती । ममेति शेषः । संनिधत्ते, प्रत्यक्षाभूदित्यर्थः । अहो इत्याश्चर्ययुक्तसंतोषे । अत्र विहरणपदमित्यस्य परिणतिविशेषणत्वपक्षे 'वेदाः प्रमाणम्' इतिवन्नपुंसकनिर्देशस्योपपत्तिः । वक्त्रचन्द्रविशेषणत्वपक्षे शङ्कैव नास्ति ॥ ७४ ॥

एवं कृष्णसाक्षात्कारे जाते कृष्णं नमस्करोति—

तेजसेऽस्तु नमो धेनुपालिने लोकपालिने ।
राधापयोधरोत्सङ्गशायिने शेषशायिने ॥ ७५ ॥

शेषे शयितुं शीलमस्यास्तीति शेषशायी तस्मै. राधाया गोपिकाविशेषभूतायाः पयोधरौ स्तनौ तयोरुत्सङ्ग उपरिप्रदेशः तत्र शयितुं शीलमस्यास्तीति तथोक्तः तस्मै, लोकान्पालयितुं शीलमस्यास्तीति लोकपाली तस्मै, धेनुपालिने गोपालाय, तेजसे, श्रीकृष्णायेत्यर्थः । नमोऽस्तु । 'नमःस्वस्ति—' इत्यादिना चतुर्थी ॥ ७५ ॥

**धेनुपालदयितास्तनस्थली-**
**धन्यकुङ्कुमसनाथकान्तये ।**
**वेणुगीतगतिमूलवेधसे**
**तेजसे तदिदमो नमो नमः ॥ ७६ ॥**

धेनुपालानां गोपालानां दयिताः स्त्रियः तासां स्तनस्थली कुचप्रदेशः तत्र धन्यः कृतार्थः कुङ्कुमः हरिद्रादिचूर्णविशेषः तेन सनाथा सक्ता कान्तिर्यस्य तस्मै, वेणुगीतानां गतयः स्वरविशेषाः तासां मूलवेधसे मूलब्रह्मणे, गानप्रभेदसंपादनसमर्थायेत्यर्थः । तेजसे श्रीकृष्णाय, तदिदमिति नमोविशेषणम् । ओं नमो नमः । सम्भ्रमेण द्विरुक्तिः । 'नमःस्वस्ति-' इत्यादिना चतुर्थी ॥ ७६ ॥

एवं नमस्कृत्य येन प्रकारेण स्वाभिमुख्येन कृष्ण आयाति तं प्रकारमाह—

**मृदुक्वणन्नूपुरमन्थरेण**
**बालेन पादाम्बुजपल्लवेन ।**
**अनुक्वणन्मञ्जुलवेणुगीत-**
**मायाति मे जीवितमात्तकेलि ॥ ७७ ॥**

आत्ताः केलयो विहारा येन तत् मे मम जीवितं प्राणभूतं श्रीकृष्णाख्यं तेजः, मृदु यथा तथा क्वणत् ध्वनत् नूपुरं मञ्जीरो यस्य तेन मन्थरेण मन्दीभूतेन, बालेन सूक्ष्मेण कोमलेन वा पादः अम्बुजपल्लव इव तेन । अम्बुजदलतुल्यपादाभ्यामित्यर्थः । अनुक्वणत् नूपुरक्वणितमनुसृत्य जायमानं मञ्जुलं श्राव्यं वेणोर्गीतं यस्मिन्कर्मणि तद्यथा भवति

तया आयाति आगच्छति, वेणुगानसहितचित्रवृत्तविशिष्टं सदाशाती-रत्यर्थः ॥ ७७ ॥

सोऽयं विलासमुरलीनिनदामृतेन
सिञ्चन्नुदञ्चितमिदं मम कर्णयुग्मम् ।
आयाति मे नयनबन्धुरनन्यबन्धु-
रानन्दकन्दलितकेलिकटाक्षलक्षः ॥ ७८ ॥

आनन्दकन्दलान्सुखाङ्कुरान्कुर्वन्तीति आनन्दकन्दलिताः । आनन्दकन्दलशब्दात्तत्करोतीतिण्यन्तात्कर्तरि क्तः । 'निष्ठायां सेटि' इति णिलोपः । प्रेक्षकजनानन्दसंपादक इत्यर्थः । त एव केलिकटाक्षा विलासापाङ्गदृक्षयः तैः, लक्ष्यत इति लक्षः । 'अकर्तरि च कारके—' इति कर्मणि घञ् । यद्वा आनन्दकन्दलितानि केलिकटाक्षाणां लक्षाणि लक्षसंख्याकाः कटाक्षा यस्य सः, अत एव नयनबन्धुः सोऽयं प्रसिद्धोऽयम्, अन्यस्यापि कस्यचित् बन्धुर्न भवतीत्यनन्यबन्धुः श्रीकृष्ण इत्यर्थः । उदञ्चितं वेणुगानाकर्णनाय उन्मुखं इदं मम कर्णयुग्मं श्रोत्रयुगं विलासेन श्राव्येण मुरल्या वंश्या निनदः स एवामृतं तेन सिञ्चन् आर्द्रं कुर्वन् । वेणुनादामृतेन श्रोत्रयोः सुखं कुर्वन्नित्यर्थः । आयाति ॥ ७९ ॥

दूराद्विलोकयति वारणखेलगामी
धाराकटाक्षसमरितेन विलोचनेन ।
आरादुपैति हृदयंगमवेणुनाद-
वेणीदुघेन दशनावरणेन देवः ॥ ७९ ॥

वारणखेलगामी गजलीलागमनः, हृदयंगमो हृद्यः । 'गमश्च' इति

खच् । 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । स चासौ वेणुनादश्च स एव वेणी प्रवाहः । 'प्रवाहो वेणी वा' इति हलायुधः । संतन्यमानो वेणुनाद इति यावत् । तां दोग्धीति तेन । 'दुहः कब्घश्च' इति कप्प्रत्ययो घकारश्च । दशनावरणेन ओष्ठेन उपलक्षितो देवः श्रीकृष्णः, धाराकटाक्षाः प्रवाहभूतकटाक्षाः तेषां भरोऽस्य संजात इति तेन विलोचनेन, लोचनद्वयेनेत्यर्थः । दूराद्विलोकयति । आरात् 'आराद्दूरसमीपयोः' इत्यमरः । उपैति समीपमागच्छति च ॥ ७९ ॥

**त्रिभुवनसरसाभ्यां दीप्तभूषापराभ्यां**
**दृशि दृशि शिशिराभ्यां दिव्यलीलाकुलाभ्याम् ।**
**अशरणशरणाभ्यामद्भुताभ्यां पदाभ्या-**
**मयमयमनुकूजद्वेणुरायाति देवः ॥ ८० ॥**

श्रीकृष्णः अनुकूजन् रणन् वेणुर्यस्य स तथोक्तः सन्, त्रिभुवनस्य सरसाभ्यां रसवद्भ्याम् । सर्वेषामतिमनोहराभ्यामित्यर्थः । दीप्तभूषा भूम्याभरणानि अपरा निकृष्टा याभ्यां ताभ्याम् । यद्वा दीप्तभूषाभ्यां सकाशात्पराभ्यामुत्कृष्टाभ्याम्, अत एवाद्भुताभ्याम् आश्चर्यसंपादकाभ्याम्, दिवि भवा दिव्याः, अन्यदुर्लभा इत्यर्थः । ताभिर्लीलाभिर्विलासैराकुलाभ्याम् , विलासयुक्ताभ्यामित्यर्थः । दृशि दृशि प्रतिदर्शनम् । 'नित्यवीप्सयोः' इति वीप्सार्थे द्विर्भावः । शिशिराभ्यां शीतलाभ्याम् । प्रेक्षकजनचक्षुषामाह्लादसंपादकाभ्यामित्यर्थः । अशरणा अगतिकाः तेषां शरणाभ्यां रक्षितृभ्यां पदाभ्याम् अयमयमायाति समीपं यथा तथा आगच्छतीत्यर्थः ॥ ८० ॥

। आगच्छन्तं पुरुषं निर्दिशति—

सोऽयं मुनीन्द्रजनमानसतापहारी
सोऽयं मदव्रजवधूवसनापहारी ।
सोऽयं तृतीयभुवनेश्वरदर्पहारी
सोऽयं मदीयहृदयाम्बुजतापहारी ॥

यो मुनीन्द्राणां तपस्विश्रेष्ठानां मानसतापं मनस्तापं हर्तुं शीलमस्यास्तीति स तथोक्तः सोऽयम् । यो मद्व्रजवधूनां मत्तव्रजस्त्रीणां वसनान्यपहर्तुं शीलमस्यास्तीति स तथोक्तः सोऽयम् । यः तृतीयभुवनेश्वरस्य दर्पं हर्तुं शीलमस्यास्तीति तथोक्तः। गोवर्धनोद्धारणादिनेति भावः। सोऽयम् । यो ममेदं मदीयम् । शैषिकश्छप्रत्ययः । तच्च तद्हृदयं च तदेवाम्बुजमम्बुरुहं तस्य तापं हर्तुं शीलमस्यास्तीति तथोक्तः सोऽयम् । मद्हृदये सदा चिन्त्यमानः कृष्ण एवायमित्यर्थः । तापहारीत्यादौ सर्वत्र भूतार्थे वा णिनिः ॥ ८१ ॥

मम नयनयोः साफल्यमित्याह—

सर्वज्ञत्वे च मौग्ध्ये च सार्वभौममिदं महः ।
निर्विशन्नयनं हन्त निर्वाणपदमश्नुते ॥ ८२ ॥

सर्वज्ञत्वे च मुग्धस्य सुन्दरस्य भावो मौग्ध्यमिति तस्मिंश्च सार्वभौमं सर्वभूमेरीश्वरम् । इदमेव सर्वज्ञमतिसुन्दरं चेत्यर्थः । इदं पुरोवर्ति महः तेजः कर्म निर्विशत् प्रविशत् नयनं कर्तृ निर्वाणपदं मुक्तिपदम् अश्नुते अनुभवतीत्यर्थः ॥ ८२ ॥

पुरश्चानमेतद्‌नवकशोभ-
मुग्धेक्षणाम्बुरुहं मुखेन्दोः ।

**तृष्णाम्बुराशिं त्रिगुणीकरोति**
**कृष्णाह्वयं किंचन जीवितं मे ॥ ८३ ॥**

मे मम जीवितं जीविका, किंचन इत्थमिति वक्तुमशक्यम्, निरतिशयसुन्दरमित्यर्थः । कृष्णाह्वयं श्रीकृष्णनामकम् एतत्पुरोवर्ति, मुखेन्दोः सकाशात् उष्णेतरांशोः शीतकिरणस्य, चन्द्रस्येत्यर्थः । उदयम् आविर्भावं पुनरुक्ता शोभा यस्य तं तथोक्तं पुष्णानं कुर्वेदित्यर्थः । चन्द्रोदयं व्यर्थं कुर्वेदिति भावः । तृष्णाम्बुराशिम् आशासमुद्रम् । मयीत्यनुषङ्गः । त्रिगुणीकरोति प्रवर्तयतीत्यर्थः ॥ ८३ ॥

मम मनसि यन्मुखं द्योतितं तदेवेदं मुखमित्याह—

**तदेतदाताम्रविलोचनश्री-**
**संभाविताशेषविनम्रवर्गम् ।**
**मुहुर्मुरारेर्मधुराधरोष्ठं**
**मुखाम्बुजं चुम्बति मानसं मे ॥ ८४ ॥**

आताम्रे ईषदरुणे ते च ते विलोचने च तयोः श्रीः कान्तिः तया संभावितो बहुमन्यमानः अशेषविनम्रवर्गः समस्तप्रणतजनसमूहो येन तत्, मधुरः अधरोष्ठो यस्य तत्तथोक्तं मुरारेः श्रीकृष्णस्य मन्मुखाम्बुजं कर्म मे मम मानसं कर्तृ मुहुः पुनः पुनः चुम्बति सदा ध्यायति तत्प्रसिद्धं मुखम् एतत्पुरोवर्ति परिदृश्यमानं मुखम् । तस्मादयं कृष्ण एवेत्यर्थः ॥ ८४ ॥

**करौ शरदुदञ्चिताम्बुजविलासशिक्षागुरू**
**पदौ विबुधपादपप्रथमपल्लवोल्लङ्घिनौ ।**

दृशौ दलितदुर्मदत्रिभुवनोपमानश्रियौ
विलोकय विलोचनामृतमहो महच्छैशवम् ॥

हे विलोचन हे नयन, 'एङ्ह्रस्वात्—' इति मकारलोपः। अमृतम् अमृतवद्विद्यमानम्। अतिसुन्दरमित्यर्थः। महस्तेजो यस्य तत्; महत आदिपुरुषस्य कृष्णस्येत्यर्थः। शैशवं बाल्यं विलोकय पश्य। किमर्थं द्रष्टव्यमित्याशङ्क्याह— कराविल्यादिना। करौ हस्तौ शरदि शरत्काले उदञ्चितानि उत्पन्नानीत्यर्थः। तान्यम्बुजानि तेषां विलासाः कान्त्यादयः विकासविलासा इत्यर्थः। तेषां शिक्षायां गुरू। ततोऽप्यधिकशोभावन्ता-वित्यर्थः। पदौ पादौ। पच्छब्दः। द्विवचनम्। विबुधपादपानां कल्पवृ-क्षाणां प्रथमपल्लवा नूतनकिसलयानि तान्युल्लङ्घयितुं शीलमनयोरस्तीति तथोक्तौ। दृशौ नेत्रे दलिता विदारिता दुर्मदानां गर्विष्ठानां त्रिभुवनोप-मानानां त्रिभुवनविद्यमानसाम्यवस्तूनां श्रीः शोभा याभ्यां ते तथोक्ते। तस्मिन्कृष्णे शैशवमवश्यं द्रष्टव्यमिति भावः॥ ८५॥

आचिन्वानमहन्यहन्यहनि साकारान्विहारक्रमा-
नारुन्धानमरुन्धतीहृदयमप्यार्द्रस्मितास्यश्रिया।
आतन्वानमनन्यजन्मनयनश्लाघ्यामनर्घां दशा-
मामन्दं व्रजसुन्दरीस्तनतटीसाम्राज्यमुज्जृम्भते॥

अहन्यहन्यहनि प्रत्यहम्। वीप्सार्थे द्विर्भावे कर्तव्ये संभ्रमेण त्रिरुक्तिः। साकारानाकारसहितान् विहारक्रमान्विहारविधीन्। 'क्रमस्तु पदविन्यासे वेदपाठान्तरे विधौ' इति शब्दार्णवे। आचिन्वानं संपादयत्। आर्द्रं सरसं स्मितं यस्य तत्तथोक्तं तच्च तत् आस्यं मुखं च तस्य श्रिया कान्त्या। 'आर्द्रस्मितार्द्रश्रिया' इति पाठे आर्द्रस्मितं सरसस्मितं तस्य आर्द्रश्रिया

सरससंपत्त्या अतिक्लिष्टमरुन्धतीहृदयमपि वसिष्टभार्याचित्तमपि कर्म आरुन्धानम् ईषत्स्वाभिमुखं कुर्वाणम् । पत्यौ मुखत्यागपूर्वकमीषत्स्वोन्मुखं कुर्वदित्यर्थः । अनन्यजन्मनो मन्मथस्य । 'कुसुमेषुरनन्यजः' इत्यमरः । नयनाभ्यां श्लाघ्यां सुखामनर्घां श्रेष्ठां दशामवस्थामातन्वानं समन्ताद्विस्तरत् । मन्मथनयनयोरप्याश्चर्यसंपादकमित्यर्थः । ब्रजसुन्दरीस्तनतटीषु साम्राज्यं निःशङ्कतया प्रवर्तमानमाधिपत्यमित्यर्थः । गोपस्त्रीकुचकुम्भेषु निःशङ्कं प्रवर्तमानं कृष्णाख्यं मह इत्यर्थः । आमन्दमीषन्मन्दं स्फुटं यथा तथेत्यर्थः । उज्जृम्भते प्रकाशते । मम नयनयोरिति शेषः ॥ ८६ ॥

तमुच्छ्वसितयौवनं तरलशैशवालंकृतं
मदच्छुरितलोचनं मदविमुग्धहासामृतम् ।
प्रतिक्षणविलोभनं प्रणयपीतवंशीमुखं
जगत्त्रयमनोहरं जयति मामकं जीवितम् ॥ ८७ ॥

ममेदं मामकम् । 'युष्मदस्मदोरन्यतरस्याम्–' इत्यणि 'तवकममकावेकवचने' इति ममकादेशः । जीवितं जीवनहेतुभूतं वस्तु श्रीकृष्णाख्यमित्यर्थः । समुच्छ्वसितं सम्यगुद्बुद्धं यौवनं यस्य तत् । समुच्छ्वसितमित्यत्र वर्तमाने क्तः । अत एव तरलशैशवेन नश्यच्छैशवेनालंकृतम्, मदेन च्छुरिते विकसिते, मदेन सम्यगुज्जृम्भमाणे इत्यर्थः । लोचने यस्य तत् । मदेन विमुग्धं सुन्दरं हासामृतं यस्य तत् । क्षणे क्षणे प्रतिक्षणम् । 'अव्ययं विभक्ति–' इत्यादिना अव्ययीभावः । विलोभनं प्रेक्षकजनस्य मोहसंपादकमित्यर्थः । प्रणयेन प्रेम्णा पीतं चुम्बितं वंशीमुखं वेणुविवरप्रदेशो येन तत् । जगत्त्रयमनोहरं त्रिभुवनसुन्दरं सत् जयति सर्वोत्कर्षेण वर्तते ॥ ८७ ॥

चित्रं तदेतच्चरणारविन्दं
चित्रं तदेतन्नयनारविन्दम् ।
चित्रं तदेतद्वदनारविन्दं
चित्रं तदेतत्पुनरम्ब चित्रम् ॥ ८८ ॥

तत्तत्प्रसिद्धम् एतत्पुरोदेशे मया परिदृश्यमानं चरणारविन्दमिति तस्य कृष्णस्य एतत्परिदृश्यमानं चरणारविन्दं चित्रमिति वा योजना । एवमितरत् द्वयं योजनीयम् । हे अम्ब, पुनः पुनःपुनरित्यर्थः । तदेतच्चित्तचरणारविन्दादिविशिष्टं कृष्णाख्यं वस्तु चित्रं चित्रमित्यादरेण द्विरुक्तिः । अत्यद्भुतमित्यर्थः ॥ ८८ ॥

अखिलभुवनैकभूषण-
मधिभूषितजलधिदुहितृकुचकुम्भम् ।
व्रजयुवतिहारवल्ली-
मरकतनायकमहामणिं वन्दे ॥ ८९ ॥

अखिलभुवनानां समस्तजगताम् एकभूषणं मुख्यभूषणम्, अधिभूषितौ अलंकृतौ जलधिदुहितुर्लक्ष्म्याः । रुक्मिण्या इत्यर्थः ।, कुचकुम्भौ येन तम्, व्रजयुवत्यो हारवल्ल्य इव तासां मरकत इन्द्रनीलः ,स एव नायकमहामणिः हारमध्यविद्यमानस्थूलमणिः तम्, कृष्णमित्यर्थः । वन्दे ॥ ८९ ॥

मधुरं मधुरं वपुरस्य विभो
मधुरं मधुरं वदनं मधुरम् ।

मधुगन्धिमृदुस्मितमेतदहो
मधुरं मधुरं मधुरं मधुरम् ॥ ९० ॥

अस्य पुरः परिदृश्यमानस्य विभोः कृष्णस्य वपुः शरीरं मधुरं मधुरम् । अतिसुन्दरमित्यर्थः । संभ्रमेण द्विरुक्तिः । मधुनः पुष्परसस्येव गन्धो यस्येति मधुगन्धि । 'उपमानाच' इति गन्धशब्दस्येकारोऽन्तादेशः । मृदु मन्दस्मितं यस्य तत् अस्य विभोर्मधुरं सुन्दरं वदनं मधुरं मधुरम् अतिसुन्दरमित्यर्थः । संभ्रमेण द्विरुक्तिः । पुनः संभ्रमेणाह— एतत्पुरोवर्ति कृष्णाख्यं तेजः मधुरं मधुरं मधुरं मधुरम् । अत्र संभ्रमेण बहूक्तिः । अहो इति हर्षे ॥ ९० ॥

शृङ्गाररससर्वस्वं शिखिपिञ्छविभूषणम् ।
अङ्गीकृतनराकारमाश्रये भुवनाश्रयम् ॥ ९१ ॥

शृङ्गाररसस्य सर्वस्वं सर्वार्थभूतम्, राशीकृतशृङ्गाररूपमित्यर्थः । शिखिपिञ्छं विभूषणं यस्य तत्, अङ्गीकृतः स्वीकृतः नराकारो मनुष्यदेहः येन तम्, भुवनाश्रयं प्रपञ्चाधारभूतम् । उपादानकारणत्वादिति भावः । आश्रये सेवे ॥ ९१ ॥

नाद्यापि पश्यति कदाचन दर्शनेन
चित्तेन चोपनिषदा सुदृशां सहस्रम् ।
स त्वं चिरं नयनयोरनयोः पदव्यां
स्वामिन्कया नु कृपया मम संनिधत्से ॥

सु शोभनं दृक् ज्ञानं येषां तेषां सुदृशाम्, विदुषामित्यर्थः । सहस्र

सहस्रसंख्या, समूह इत्यर्थः। अद्यापि अस्मिन्दिने वा कदाचन यदा कदाचिद्वा दर्शनेन चक्षुषा वा चित्तेन मनसा वा उपनिषद्भिर्वा न पश्यति। त्वामिति शेषः। हे स्वामिन्, स त्वं तादृशस्त्वं मम मन-श्चेन्नयनयोः पदव्यां मार्गे कया कृपया नु चिरं चिरकालं संनिधत्से संनिधानं कुरुषे प्रत्यक्षो भवसीत्यर्थः। नुः प्रश्ने ॥ ९२ ॥

केयं कान्तिः केशव त्वन्मुखेन्दोः
कोऽयं वेषः कापि वाचामभूमिः।
सेयं सेयं स्वादुता मञ्जुलश्री-
र्भूयो भूयो भूयसस्तन्नमामि ॥ ९३ ॥

हे केशव हे कृष्ण, त्वन्मुखेन्दोः इयं परिदृश्यमाना कान्तिः का कापि इत्थमिति वक्तुमशक्या। एवमेवात्र किंशब्दो योज्यः। अयं परिदृश्यमानो वेषः कः। सा प्रसिद्धा इयं परिदृश्यमाना। संभ्रमेण सेयं सेयमिति द्विरुक्तिः। स्वादुता लावण्यं वाचामभूमिः वागविषयः मञ्जुलश्रीः सौन्दर्यश्रीरपि का। तत् तस्मात्कारणात् भूयो भूयः पुनः पुनः भूयसो बहुधा नमामि। हे स्वामिन्निति शेषः ॥ ९३ ॥

वदनेन्दुविनिर्जितः शशी
दशधा देव पदं प्रपद्य ते।
अधिकां श्रियमश्नुतेतरां
तव तारुण्यविजृम्भितं कियत् ॥ ९४ ॥

हे देव, शशी चन्द्रः ते तव वदनेन्दुविनिर्जितः मुखेन्दुना पराभूत

सन् दशधा दशप्रकारेण । दश नखा भूत्वेत्यर्थः । दशवारमिति च गम्यते । पदं पादयुगलं प्रपद्य प्राप्य अधिकां श्रियं स्वाभाविककान्त्यपेक्षया अधिककान्तिम् अश्नुतेतराम् अतिशयेन प्राप्नोति । 'द्विवचन–' इत्यादिना तरप् । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यामुप्रत्ययः । तव कारुण्यस्य दयाया विजृम्भितं स्फूर्तिः कियत्, अधिकमित्यर्थः । अनेन मुखपदयोश्चन्द्राधिकसौन्दर्यमुक्तम् ॥ ९४ ॥

> त्वन्मुखं कथमिवाब्जसमानकक्ष्यं
> वाङ्माधुरीबहुलपर्वकलासमृद्धम् ।
> तत्किं ब्रुवे किमपरं भुवनैककान्तं
> यस्य त्वदाननसमा सुषमा सदा स्यात् ॥

वाङ्माधुर्यं एव बहुला अधिकाः पर्वकलाः, यद्वा वाङ्माधुर्यो बहुलपर्वकला इव इत्युपमितसमासो वा । ताभिः समृद्धं तत्प्रसिद्धं त्वन्मुखम् अब्जं च अब्जश्च अब्जौ तयोश्चन्द्रतामरसयोरित्येकशेषः । समानकक्ष्यं समानकोटि कथमिव केन प्रकारेण, भवेदिति शेषः । केनापि प्रकारेण न भवतीत्यर्थः । यद्वा कथमिव केन प्रकारेण ब्रुवे । केनापि प्रकारेण वक्तुं समर्थो न भवामीत्यर्थः । अस्मिन्पक्षे समानकक्ष्यमित्यत्रेवशब्दोऽध्याहर्तव्यः । यस्य वस्तुनः सदा त्वदाननसमा त्वन्मुखसमा सुषमा उत्कृष्टशोभा स्यात्, अपरं त्वन्मुखादन्यत् यद्वस्तु भुवनेषु एकमेव कान्तम्, अभिरामत्वादित्यनुषङ्गः । तद्वस्तु किं कीदृशवस्तु इति ब्रुवे । इद वस्तु त्वदाननसममिति वक्तुं न समर्थो भवामीत्यर्थः । तस्मात्त्वत्समो लोके नास्तीति भावः । 'अम्बुजतुल्यकक्ष्यम्' इति पाठेऽप्येकशेषादिकं कृत्वा पूर्ववदेव योजनीयम् । अर्थभेदस्तु नास्त्येव ॥ ९५ ॥

अखण्डनिर्वाणरसप्रवाह-
विखण्डिताशेषरसान्तराणि ।
अयन्त्रितोद्वान्तसुधार्णवानि
जयन्ति शीतानि तव स्मितानि ॥ ९६ ॥

अखण्डः परिपूर्णः निर्वाणं निर्वृतिः, सुखमित्यर्थः । तदेव रसः तस्य प्रवाहेण विखण्डितमशेषरसान्तरं येषां तानि, तथा अयन्त्रितमप्रतिबद्धं यथा तथा उद्वान्ता बहिः प्रवर्तमानाः सुधार्णवा अमृतसमुद्रा येभ्यस्तानि । सुधावदत्यन्तसुखकराणीत्यर्थः । शीतानि प्रेक्षकजनानामतिमनोहराणि तव स्मितानि जयन्ति सर्वोत्कर्षेण वर्तन्त इत्यर्थः ॥ ९६ ॥

कामं सन्तु सहस्रशः कतिपये सारस्यधौरेयकाः
कामं वा कमनीयतापरिणतिस्वाराज्यबद्धव्रताः ।
नैवैतैर्विवदामहे न च वयं देव प्रियं ब्रूमहे
यत्सत्यं रमणीयतापरिणतिस्त्वय्येव पारं गता ॥

कतिपये केवलविरला इत्यर्थः । 'प्रथमचरम-' इत्यादिना जसः शीभावः । रसेन शृङ्गारादिना सहितः सरसः तस्य भावः सारस्यं तद्रूपां धुरं भारं वहन्तीति धौरेयकाः । 'धुरो यड्ढकौ' इति ढक् । स्वार्थे कः । रसिका इत्यर्थः । कामं यथेच्छं सन्तु तिष्ठन्तु । कमनीयतायाः तत्सौन्दर्यस्य परिणतिराधिक्यं सैव स्वाराज्यं स्वर्गराज्यं तदर्थं बद्धं कृतं व्रतं पुण्यविशेषो यैस्ते सहस्रशः । 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्ययः । कामं यथेच्छ सन्तु तिष्ठन्तु । हे देव, वयम् एतैः रसिकसुन्दरजनैः नैव विवदामहे कलहं कुर्महे । 'भासनोपसंभाषा-' इत्यादिना विमतावात्मने-

पदम्। प्रियं च न ब्रूमहे। यद्यस्माद्धेतोः रमणीयतायाः सौन्दर्यस्य परिणतिः परिपाकः त्वय्येव पारं गता तीरं प्राप्ता। पूर्णत्यर्थः। सत्यम् इदं वचो यथार्थमित्यर्थः। अतिशयेन सुन्दरजनस्य लोकेऽभावात्त्वय्येव सौन्दर्यं विश्रान्तं नान्यत्रेति कृत्वा तैः सार्कं कलहं वा स्नेहं वा न कुर्म इति भावः॥ ९७॥

त्वत्संबन्धमात्रेण सर्वं वस्तु रमणीयम्, तव तु रमणीयता किमु वक्तव्येत्याह—

गलद्व्रीडा लोला मदनवनिता गोपवनिता
मधुस्फीतं गीतं किमपि मधुरा चापलधुरा।
समुज्जृम्भो गुम्भो मधुरिमकिरां मादृशगिरां
त्वयि स्थाने जाते दधति चपलं जन्म सफलम्॥

गलद्व्रीला निर्लज्जाः गोपवनिताः पशुपालकस्त्रियः। सदा गोसंचारवशाद्रसिकतानभिज्ञा इति यावत्। लोलाः त्वयि तृष्णायुक्ताः सत्यः मदनवनिता रतितुल्याः। परत्र परशब्दप्रयोगादेव तुल्यार्थलाभः। जाता इति शेषः। एवमुत्तरत्रापि तत्तल्लिङ्गवचनपरिणामेन जातशब्दो योजनीयः। गीतं त्वत्संबन्धि गीतं मधुस्फीतं मधुस्फूर्तिमत् मधुवन्मधुरमित्यर्थः। यद्वा त्वत्संबन्धि गीतं स्फीतमपि तारमपि मधु क्षौद्रतुल्यं जातम्। चापलधुरा त्वत्संबन्धि चापल्यं किमपि मधुरा इयमिति वक्तुमशक्या मञ्जुला जाता। मादृशस्य अपरिज्ञस्य गिरा वाचां गुम्भः त्वत्संबन्धिवाक्संदर्भ इत्यर्थः। मधुरिमाणं हृद्यतां किरन्ति क्षिपन्तीति तथोक्ताः तासां वाल्मीक्याद्यतिश्राव्यवाचामित्यर्थः। सम्यगुज्जृम्भ इव उज्जृम्भः पूर्तिर्यस्य स तथोक्तो जातः। मदीयस्त्वत्प्रबन्धवाक्संदर्भो-

ऽपि वाल्मीक्यादिरमणीयवाक्संदर्भतुल्यो जात इत्यर्थः । गोपवनिता-गीतिचापलधुरागुम्भरूपपदार्थानां त्वयि विषये जाते सति, गोपवनितादयः चपलं जन्म सफलं फलसहितं यथा तथा दधति वहन्ति । 'अदभ्यस्तात्' इत्यदादेशे दधातेर्बहुवचनम् । स्थाने युक्तम् । त्वत्संबन्धवशादेव सर्वेषां रमणीयतायां तव किमु वक्तव्यमिति भावः ॥ ९८ ॥

मेमदं च मे कामदं च मे
वेदनं च मे वैभवं च मे ।
जीवनं च मे जीवितं च मे
दैवतं च मे देव नापरम् ॥ ९९ ॥

हे देव, मम प्रेम ददातीति प्रेमदम् । 'आतोऽनुपसर्गे कः' इति कः । तच्च मे । कामद वाञ्छितार्थदातृ च मे । वेदनं ज्ञानं च मे । वैभवम् ऐश्वर्यं च मे । जीवनं प्राणाश्च मे । जीवितं जीवनहेतुभूतवस्त्वपि च मे । दैवतं च मे । अपरं त्वदन्यत् न नास्तीत्यर्थः । एतत्सर्वं त्वमेव, त्वद्व्यतिरिक्तमेतादृशं मम नास्तीति भावः ॥ ९९ ॥

मम वाङ्मनसयोस्त्वद्विषयत्वमेवास्तु नान्यविषयतेति प्रार्थयते—

माधुर्येण विजृम्भन्तां वाचो नस्तव वैभवे ।
चापल्येन विवर्धन्तां चिन्ता नस्तव शैशवे ॥१००॥

नः अस्माकं वाचः तव वैभवे गोवर्धनोद्धरणादौ माधुर्येण श्राव्यतया विजृम्भन्तां विशेषेण जृम्भणं कुर्वन्तु । नः अस्माकं चिन्ता मनोव्यापाररूपाः तव शैशवे बाल्ये चापल्येन लोभेन विवर्धन्तां विशेषेण वृद्धिं प्राप्नुवन्तु ॥ १०० ॥

यानि त्वच्चरितामृतानि रसनालेह्यानि धन्यात्मनां
ये वा शैशवचापलव्यतिकरा राधापराधोन्मुखाः ।
या वा भावितवेणुगीतगतयो लीलामुखाम्भोरुहे
धारावाहिकया वहन्तु हृदये तान्येव तान्येव मे ॥

धन्यात्मनां कृतार्थचित्तानां रसनालेह्यानि अत्यादरेण जिह्वाग्राह्याणि । सर्वदा अत्यादरेणोच्यमानानीति यावत् । त्वच्चरितामृतानि त्वया क्रियमाणानि व्यापारान्तराणि यानि सन्ति, राधापराधो राधाविषयकचुम्बनादिः स उन्मुखः प्रथमो येषां ते शैशवे बाल्ये चापल्येन व्यतिकरा उद्गतयः, यद्वा चापलव्यतिकराश्चपलचेष्टासमूहाः ये वा सन्ति । अत्र वाशब्दः समुच्चये लीलामुखाम्भोरुहे विलासयुतवदनाम्बुजे भाविता उत्पाद्यमाना वेणुगीतस्य गतयः प्रभेदाः या वा सन्ति । अत्रापि वाशब्दः समुच्चये । तान्येव पूर्वोक्तकृष्णचरितादीन्येव । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकशेषः । विकल्पेनैकवद्भावाद्बहुवचनम् । संभ्रमेण द्विरुक्तिः । मे मम हृदये धारावाहिकया वहन्तु । मम चित्तं सदा त्वद्व्यापारप्रवणमेव भूयादिति भावः ॥ १०१ ॥

ननु मद्धृदये सदा प्रवर्ततामिति प्रार्थितम्; तावता तव किं प्रयोजनमित्याशङ्क्याह—

भक्तिस्त्वयि स्थिरतया भगवन्यदि स्या-
द्दैवेन नः फलितदिव्यकिशोरवेषे ।
मुक्तिः स्वयं मुकुलिताञ्जलि सेवतेऽस्मा-
न्धर्मार्थकामगतयः समयप्रतीक्षाः ॥ १०२ ॥

हे भगवन्, नः अस्माकं दैवेन अदृष्टविशेषेण फलितः स्वस्य फलत्वेन संपादितः दिव्य इतरासाधारणः किशोरवेषो यस्य तस्मिन् । अस्मददृष्टफलाभावे त्वद्दर्शनमतिदुर्लभमिति भावः । धर्मार्थकामानां गतयः समाचाराः समयप्रतीक्षाः आवसरिकप्रयत्नपूर्विकाः । धर्मार्थकामा आवसरिकं प्रत्येव आगन्तार इत्यर्थः । त्वद्भक्तिरस्ति चेन्मम किं दुर्लभमिति कृत्वा तामेव प्रार्थय इति भावः ॥ १०२ ॥

जय जय जय देव देव देव
श्रवणमनोनयनामृतावतार ।
जय जय जय देव देव देव
त्रिभुवनमङ्गलदिव्यनामधेय ॥ १०३ ॥

श्रवणमनोनयनानाममृतवदवतार आविर्भावो यस्य तस्य संबुद्धिः । त्रिभुवनस्य मङ्गलानि शोभनरूपाणि दिव्यानि इतरासाधारणानि नामधेयानि यस्य तस्य संबुद्धिः । देव देव देवेत्यादिबहूक्तिः संभ्रमेण । अन्यद्व्याख्यातप्रायम् ॥ १०२ ॥

तुभ्यं निर्भरहर्षवर्षविवशावेशस्फुटाविर्भव-
द्भूयश्चापलभूषितेषु सुकृतां भावेषु निर्भासते ।
श्रीमद्गोकुलमण्डनाय महते वाचां विदूरापदे
माधुर्यैकरसार्णवाय महसे कस्मैचिदस्मै नमः ॥

निर्भरेण अतिमात्रेण हर्षवर्षेण संतोषवृष्ट्या विवशावेशः बाह्यव्यापार-विस्मरणता तेन स्फुटं यथा तथा आविर्भवता प्रकाशमानेन भूयश्चापलेन

अधिकचापल्येन भूषितेषु सुकृतां पुण्यकृतां भावेषु मनोव्यापारेषु निर्भासते निरन्तरं प्रकाशमानाय, श्रीमद्गोकुलमण्डनाय श्रीयुतगोकुलालंकाराय, महते व्यापकाय, वाचामुपनिषदां विदूरायते अविदूरत्वेऽपि विदूरमिवाचरते। उपनिषत्प्रतिपाद्यत्वेऽपि शब्दग्राहिकया अप्रतिपाद्यमानायेत्यर्थः। विदूरशब्दात्कर्तुर्भवत्यर्थे लोहितादित्वात्क्यष्। 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः। लटः शत्रन्तं रूपम्। माधुर्यमेकः केवलो रसो यस्य स चासौ अर्णवः समुद्रश्च तस्मै, कस्मैचित् इत्थमिति वक्तुमशक्याय, अग्रे पुरो वर्तमानाय महसे तुभ्यं नमः। 'नमःस्वस्ति–' इत्यादिना चतुर्थी॥

स्वीयं विज्ञापनमत्यादरेण श्रोतव्यमिति कृष्णं प्रार्थयते—

> ईशानदेवचरणाभरणेन नीवी-
> दामोदरस्थिरयशःस्तवकोद्गमेन।
> लीलाशुकेन रचितं तव देव कृष्ण
> कर्णामृतं वहतु कल्पशतान्तरेऽपि॥ १०५॥

हे कृष्ण देव, ईशानदेवो महादेवः तस्य चरणौ पादौ आभरणं यस्य तेन। आभरणं यथा अत्यादरेण ध्रियते तद्वदत्यादरेण ध्रियमाणशिवपादारविन्देनेत्यर्थः। अनेन शिवद्वेषप्रयुक्तदोषो मयि मास्त्विति सूचितम्। नीवीभूतं मूलधनभूतम्। 'नीवीपरिपणेऽपि च', इत्यमरः। 'मूलधनम्' इति मुकुटः। दामोदरस्य कृष्णस्य स्थिरयशः निश्चलकीर्तिः तदेव स्तवकः गुच्छकः वृक्षास्थितसंवृतपुष्पसमूह इति यावत्। तत्र उद्गमेन उन्मुखेन अत्यादरयुक्तेनेत्यर्थः। लीलाशुकेन त्वया विलासार्थं पोष्यकीरवदर्थज्ञानं विनापि शब्दानुच्चयता मयेत्यर्थः। रचितं भक्तिस्त्वयि मम दृढास्त्विति प्रार्थनारूपं वचनजातम्। यद्वा "चिन्तामणिः–' इत्यादिश्लोकजातं कल्प-

मतान्तरेऽपि तव कर्णयोरमृतं सत् वहतु प्राप्नोतु। मया रचितमिदं विज्ञापनरूपश्लोकजातं येन येन यदा यदा पठ्यते तदा तदा अमृतवत्त्वया ग्राह्यमिति भावः ॥ १०५ ॥

नन्वस्मत्कर्णयोरमृतवदर्पणेऽपीतरजनकर्णामृतत्वाभावादस्मिन्वाक्यजाते कथं तेषामादर इत्याशङ्क्य तदादरणमेव सर्वादरणहेतुरित्याह—

धन्यानां सरसानुलापसरणीसौभाग्यमभ्यस्यतां
कर्णानां विवरेषु कामपि सुधावृष्टिं दुहानं मुहुः।
वश्यानां सुदृशां मनोनयनयोर्मग्नस्य देवस्य नः
कर्णानां वचसां विजृम्भितमहो कृष्णस्य कर्णामृतम् ॥

नः अस्माकं मनोनयनयोर्मग्नस्य सदा मनश्चक्षुर्विषयभूतस्य देवस्य कृष्णस्य कर्णामृतम्, सरसा रसयुक्ताः ते च ते अनुलापा वाग्विशेषाः तेषां सरणी रीतिः तस्याः सौभाग्यं माधुर्यादिकमभ्यस्यताम्, तत्र परिशीलनं कुर्वतामित्यर्थः। अभिपूर्वात् 'असु क्षेपणे' इत्यस्माल्लट् श्यन्। लटः शत्रादेशः। धन्यानां कृतार्थानाम्। यद्वा, सरसा अनुलापा येषां ते तथोक्ता वाल्मीक्यादयः तेषां सरणी काव्येषु शब्दरचनारीतिः तस्याः सौभाग्यं माधुर्यादिकं तदभ्यस्यतां पुनः पुनरनुभवतां धन्यानामिति वा योजना। काव्यगुणज्ञानामित्यर्थः। कर्णानां विवरेषु बिलेषु कामपि वक्तुमशक्यां सुधावृष्टिम् अमृतवर्षं मुहुः पौनःपुन्येन दुहानं कुर्वाणं सत् वश्यानां जितेन्द्रियाणां सुष्ठु दृक् ज्ञानं येषां तेषाम्, विदुषामित्यर्थः। कर्णानां वचसां च विजृम्भितं विशेषेण प्रकाशमानम्, भवतीति शेषः।

अहो इत्याश्चर्ये । त्वदङ्गीकारमात्रेण काव्यगुणज्ञानां जीवन्मुक्तानां च वचः कर्णयोरतिशयेन प्रकाशमानं भवेदिति कृत्वा प्रचयं प्राप्स्यतीत्यभिप्रायः ॥ १०६ ॥

एवं मद्वचनानि त्वद्विषयाण्येव भवन्तु, तान्यपि भवता भक्तादरेणामृतवच्छ्रोतव्यानीति संप्रार्थ्य, इदानीं मम ज्ञानकारणं चक्षुरादि यत्र यत्र प्रवर्तते तत्र तत्र त्वद्विषया एव विषया भवन्त्विति कृष्ण प्रार्थयते—

अनुग्रहद्विगुणविशाललोचनै-
रनुस्वनद्वेणुगलद्द्रवामृतैः ।
यतो यतः प्रसरति मे विलोचनं
ततस्ततः स्फुरतु तवैव वैभवम् ॥ १०७ ॥

इति श्रीलीलाशुकविरचिते
श्रीकृष्णकर्णामृते
प्रथम आश्वासः ॥

अनुग्रहेण द्विगुणविशाले अत्यर्थविस्तृते लोचने येषां तैः । यद्वा अनुग्रहेण द्विगुणविशालानि अतिदीर्घाणि तानि च तानि लोचनानि दृष्टयो यैस्तैः । संतन्यमानदृष्टिभिरित्यर्थः । अस्मिन्पक्षे चकारोऽध्याहर्तव्यः । एवं च विशाललोचनैः वेणुगलद्द्रवामृतैश्च इति योजना । अनुस्वनन् अनुध्वनन् स चासौ वेणुश्च तस्माद्गलन्त उत्पन्नाः ते च ते रवाश्च ते अमृतानीव तैरुपलक्षितं तव वैभवमेव विलास एव यतो यतो यत्र यत्र मम

लोचनम्, ज्ञानकारणं चक्षुरादीत्यर्थः । प्रसरति प्रवर्तते ततस्ततः तत्र
त्र स्फुरतु प्रकाशताम् ॥ १०७ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणपशुपतिकमल-
भट्टोपाध्यायपुत्रेण कोदण्डमाम्नायभङ्गुक्तिमुक्ता-
मणिना पापयल्लयसूरिणा विरचितायां
श्रीकृष्णकर्णामृतव्याख्यायां
सुवर्णचषकसमाख्यायां
प्रथमोऽध्यायः ॥



# द्वितीय आश्वासः ॥



पूर्वशतकान्ते त्वद्वैभवमेव मदीयं ज्ञानकरणं गोचरयतिवित्युक्तम् । तद्वैभवं येन येन प्रकारेण प्रतीतं तेन तेन प्रकारेणाह—

अभिनवनवनीतस्निग्धमापीतदुग्धं
दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः ।
दिशतु भुवनकृच्छ्रच्छेदि तापिञ्छगुच्छ-
च्छवि नवशिखिपिञ्छालाञ्छितं वाञ्छितं नः ॥

अभिनवनवनीतेन नूतननवनीतेन स्निग्धं स्वच्छम्, आपीतमीषत्पीतवर्णं दुग्धं क्षीरबिन्दवो यस्य तत्, ईषत्पीतवर्णक्षीरकणैर्व्याप्तमित्यर्थः । यद्वा, आपीतं पीयमानं दुग्धं येन तत्तथोक्तमिति वा । दधिकणैः परिदिग्धं समन्ताद्भूषितम्, तापिञ्छस्य तमालस्य वृक्षविशेषस्य, 'कालस्कन्धस्तमालः स्यात्तापिञ्छोऽपि' इत्यमरः । गुच्छानां स्तबकानां छविः कान्तिरिव कान्तिर्यस्य तत्, नवया नूतनया शिखिपिञ्छया मयूरबर्हेण लाञ्छितमलंकृतम् । पिञ्छाशब्दस्याकारान्तस्य प्रयोगो निघण्ट्वन्तरेषु मृग्यः । यद्वा, चम्पूरामायणेऽपि 'इन्द्रजालविधिसाधकपिञ्छिकेव' इति भोजराजप्रयोगाद्वा साधुत्वं ज्ञेयम् । भुवनानां समस्तजनानां कृच्छ्रमुपद्रवः तच्छेत्तुं शीलमस्यास्तीति तथोक्तम्, मुरारेः कृष्णस्य मुग्धं सुन्दरम्, 'मुग्धः सुन्दरमूढयोः' इत्यमरः । अङ्गं शरीरं नः अस्माकं वाञ्छितमभीष्टं दिशतु ददातु ॥ १ ॥

यां दृष्ट्वा यमुनां पिपासुरनिशं व्यूहो गवां गाहते
विद्युत्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते ।
उत्तंसाय तमालपल्लवमिति च्छिन्दन्ति यां गोपिकाः
कान्तिः कालियशासनस्य वपुषः सा पावनी पातु नः ॥

पातुमिच्छुः पिपासुः, जलपानार्थमित्यर्थः । गवां व्यूहः समूहः यां कान्तिं यमुनां दृष्ट्वा यमुनेति भ्रमित्वा अनिशं सदा गाहते प्रविशति; नीलकण्ठनिवहः मयूरसमूहः यां कान्तिं विद्युत्वानिति विद्युतस्तडितोऽस्य सन्तीति तथोक्तः । 'झयः' इति मतुपो मकारस्य वत्वम् । इतिना निपातेनोक्तत्वाद्विद्युत्वानित्यत्र न द्वितीया । अत एव माघे 'चिरादमुं नारद इत्यबोधि' इत्युक्तम् । द्रष्टुमुत्कण्ठतेऽन्वीहां करोति; गोपिकाः यां कान्तिं तमालपल्लवमिति तापिञ्छकिसलयमिति दृष्ट्वा भ्रमित्वा उत्तंसाय उत्तंसार्थं छिन्दन्ति च्छेत्तुमुपक्रमते; कालियशासनस्य कालियो नाम सर्पविशेषः तच्छासनस्य तच्छिक्षकस्य कृष्णस्येत्यर्थः । सा प्रसिद्धा पावनी पवित्ररूपा कान्तिः नः अस्मान् पातु रक्षतु ॥ २ ॥

देवः पायात्पयसि विमले यामुने मज्जतीनां
याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि ।
लज्जालोलैरलसविलसैरुन्मिषत्पञ्चबाणै-
र्गोपस्त्रीणां नयनकुसुमैरर्चितः केशवो नः ॥ ३ ॥

विमले निर्मले यमुनाया इदं यामुनम्, 'तस्येदम्' इत्यण् । तस्मिन्पयसि जले मज्जतीनां स्नानं कुर्वतीनां वञ्चितानि प्रतारितानि

अंशुकानि वस्त्राणि अनुनयपदैः प्रियोक्तिभिः याचन्तीनां गोपस्त्रीणां अलसानि 'अलसः सौम्यमन्दयोः' इति शब्दार्णवे। तानि च तानि विलसानि प्रकाशमानानि तैः। यद्वा, अलसानि कृष्णरूपविषयप्राप्तानि विलसानि पुनर्निवृत्तानि, कृष्णं प्राप्य पुनर्निवृत्तानीत्यर्थः। तैः अत एव उज्ज्वालोलैः लज्जारूपोपाधिवशाच्चलैः, उन्मिषन् पञ्चबाणो मन्मथो येभ्यस्तैः नयनान्येव कुसुमानि तैरर्चितः पूजितः, दृष्ट इत्यर्थः। केशवः श्रीकृष्णः नोऽस्मान्पायादवतु ॥ ३ ॥

मातर्नातः परमनुचितं यत्खलानां पुरस्ता-
　दस्ताशङ्कं जठरपिठरीपूर्तये नर्तितासि।
तत्क्षन्तव्यं सहजसरले वत्सले वाणि कुर्यां
　प्रायश्चित्तं गुणगणनया गोपवेषस्य विष्णोः ॥

हे सहजसरले स्वभावतः ऋजुहृदये। अत एव प्रार्थये, अन्यथा मत्प्रार्थनं विफलमेव स्यादिति भावः। मद्धृदयस्य सारल्ये सत्यपि दयाया अभावात्त्वत्प्रार्थनं व्यर्थमेवेत्याशङ्क्याह— हे मातरिति। मातुः पुत्रे दयायाःस्वतःसिद्धत्वादिति भावः। अत एव हे वत्सले हे दयावति, हे वाणि सरस्वति। मद्वाग्रूपेण परिणममाने इत्यर्थः। जठरमुदरं तदेव पिठरी घटः। 'जातेरस्त्रीविषयात्—' इति ङीप्। 'स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि' इत्यमरसिंहोक्तेरल्पत्वविवक्षायां स्त्रीत्वम्। तथा च स्वल्पपिठर इत्यर्थः। तस्याः पूर्तये पूरणाय। अस्मत्कुक्षिकुण्डपूरणायेत्यर्थः। खलानां दुर्जनानाम्, दोषैकदृशामित्यर्थः। पुरस्तादग्रतः नर्तितासीति यत् नर्तनं प्रापितासीति यत्। मयेति शेषः। अतः एतस्मान्नर्तनकारयितृत्वात् परम् अन्यत् अनुचितं नास्तीत्यर्थः।

तव नर्तनकारयितृत्वं क्षन्तव्यं सोढव्यम्। कुत इत्याशङ्कयाह—कु र्यामित्यादिना। गोपवेषस्य विष्णोः श्रीकृष्णस्येत्यर्थः। गुणगणनया गुणकीर्तनया प्रायश्चित्तं कुर्यां करिष्यामि ॥ ४ ॥

अङ्गुल्यग्रैररुणकिरणैर्मुक्तसंरुद्धरन्ध्रं
वारं वारं वदनमरुता वेणुमापूरयन्तम्।
व्यत्यस्ताङ्घ्रिं विकचकमलच्छायविस्तारनेत्रं
वन्दे बृन्दावनसुचरितं नन्दगोपालसूनुम् ॥ ५ ॥

अरुणा रक्तवर्णाः किरणा येषां तैः अङ्गुल्यग्रैः मुक्तानि विवृतानि संरुद्धानि च रन्ध्राणि वेणुविवराणि यस्मिन्कर्मणि तथथा तथा वेणुं वदनमरुता मुखवायुना वारं वारं पुनः पुनः आपूरयन्तम्, व्यत्यस्तौ वामदक्षिणयोर्विषमानदक्षिणवामौ अङ्घ्री पादौ यस्य तम्, विकचकमलानां विकसितपद्मानां छायेव च्छाया कान्तिर्ययोस्ते। कमलसदृशे इत्यर्थः। विस्तारे विस्तृते। विस्तारे इत्यत्र 'अकर्तरि च'— इति घञ्। विस्तारीति पाठे तु विस्तारिणी विस्तृते, नेत्रे यस्य तं बृन्दावने सुचरितं शोभनानि चरितानि संचरणानि यस्य तं नन्दगोपालसूनुं वन्दे ॥ ५ ॥

मन्दं मन्दं मधुरनिनदैर्वेणुमापूरयन्तं
बृन्दं बृन्दावनभुवि गवां चारयन्तं चरन्तम्।
छन्दोभागे शतमखमुखध्वंसिनां दानवानां
हन्तारं तं कथय रसने गोपकन्याभुजङ्गम् ॥ ६ ॥

मधुरनिनदैः श्राव्यनिनदैः मन्दं मन्दं यथा तथा वेणुमापूरयन्तम्।

श्राव्यं यथा तथा वेणुगानं कुर्वन्तमित्यर्थः । वृन्दावनभुवि वृन्दावनप्रदेशे गवां पशूनां वृन्दं समूहं चारयन्तं संचारयन्तं तृणानि भक्षयन्तमिति वा । छन्दसां वेदानां भाग एकदेशः तस्मिन् वेदान्ते इत्यर्थः । चरन्तं वर्तमानम्, प्रतिपाद्यमित्यर्थः । यद्वा चरन्तं गोपैः सह चरन्तमिति वा । छन्दोभिर्वेदैः प्रतिपाद्यभागे; यज्ञभागनिमित्तमित्यर्थः ।, 'निमित्तात्कर्मयोगे' इति निमित्तसप्तमी। शतमखस्य इन्द्रः मुख्यमादिर्येषां ते तथोक्ताः तान् ध्वंसितुं शीलमेषामस्तीति तथोक्ताः तेषां दानवानाम्, राक्षसानामित्यर्थः । 'कर्तृकर्मणोः कृति' इति कृद्योगात्कर्मणि षष्ठी। हन्तारं नाशकं तं प्रसिद्धं गोपकन्याभुजङ्गं गोपस्त्रीपिङ्गम्, विटमित्यर्थः । 'भुजङ्गः सर्पपिङ्गयोः' इति विश्वः । हे रसने, कथय कीर्तय ॥ ६ ॥

**वेणीमूले विरचितघनश्यामपिञ्छावचूडो**
**विद्युल्लेखावलयित इव स्निग्धपीताम्बरेण ।**
**मामालिङ्गन्मरकतमणिस्तम्भगम्भीरबाहुः**
**स्वप्ने दृष्टस्तरुणतुलसीभूषणो नीलमेघः ॥ ७ ॥**

वेण्याः केशबन्धस्य मूले विरचितं न्यस्तं घनश्यामं मेघवन्नीलं पिञ्छं बर्हम् अवचूडा शिरोभूषणं यस्य सः । स्निग्धपीताम्बरेण विद्युल्लेखया तडित्पङ्क्त्या 'लेखा लिपिराजिकयोः' इति विश्वः । वलयितः वेष्टितः नीलमेघ इव स्थितः । मरकतमणिस्तम्भाविव गम्भीरौ बाहू यस्य सः । तरुणतुलसीभूषणः मां रुक्मिणीम् आलिङ्गन् आश्लिष्यन् । इदमुपलक्षणम्, तयाप्यालिङ्गित इत्यपि बोध्यम् । रुक्मिणीसमेतः सन्नित्यर्थः । स्वप्ने दृष्टः । मयेति शेषः ॥ ७ ॥

कृष्णे हृत्वा सिचयनिचयं कूलकुञ्जाधिरूढे
मुग्धा काचिन्मुहुरनुनयैः किं न्विति व्याहरन्ती।
सभ्रूभङ्गं सदरहसितं सत्रपं सानुरागं
छायाशौरेः करतलगतान्यंशुकान्याचकर्ष ॥ ८ ॥

सिचयनिचयः वस्त्राणां समूहः। 'वसनं चेलं सिचयः पुंसि' इति शब्दार्णवे। हृत्वा गृहीत्वा कृष्णे कूलकुञ्जाधिरूढे सति तीरवृक्षाधिरूढे सति, काचिन्मुग्धा उदययौवना काचिद्गोपकन्यकेत्यर्थः। मुहुरनुनयैः पुनः पुनः प्रीतिवचनैः किं नु किं प्रयोजनम्? प्रियवचनं न वक्तव्यमित्यर्थः। तद्विनापि वस्त्रलाभादिति भावः। इत्यनेन प्रकारेण व्याहरन्ती वदन्ती भ्रूभङ्गेण सहितं यथा तथा, दरहसितं मन्दस्मितं तेन सहितं यथा तथा, त्रपा लज्जा तया सहितं यथा तथा, अनुरागः प्रेमविशेषः तेन सहितं यथा तथा, छायाशौरेः अनातपरूपकृष्णस्य। कृष्णच्छायाया इति यावत्। करतलगतान्यम्बराणि आचकर्ष आकृष्टवती ॥ ८ ॥

कस्याश्चिद्गोपिकायाः मनोरथं कविराह—

अपि जनुषि परस्मिन्नात्तपुण्यो भवेयं
तटभुवि यमुनायास्तादृशो वंशनालः।
अनुभवति यदेष श्रीमदाभीरसूनो-
रधरमणिसमीपन्यासधन्यामवस्थाम् ॥ ९ ॥

परस्मिन् परिदृश्यमानजन्मनोऽन्यस्मिन् जनुषि जन्मनि आत्तं प्राप्तं पुण्यं येन स तथोक्तः सन् यमुनायास्तटभुवि तीरप्रदेशे तादृशकृष्णाधर-

प्राप्तियोग्यः वंशनालो वेणुः भवेयमपि स्यामपि । अपिशब्दः संभावनायाम् । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः । भवतेर्विधिलिङुत्तमैकवचनम् । वेणुजन्मप्राप्तेः फलमाह— अनुभवतीत्यादिना । यः यमुनातीरजः वेणुः कृष्णेन ध्मायमानो वेणुः श्रीमतः कान्तिमतः लक्ष्मीवतो वा आभीरसूनोः नन्दसुतस्य कृष्णस्येत्यर्थः । अधरो मणिरिव तस्य समीपे प्रान्ते न्यासः स्थापनं तेन धन्यां कृतार्थामवस्थां दशामनुभवति ॥ ९ ॥

अयि परिचिनु चेतः प्रातरम्भोजनेत्रं
कबरकलितचञ्चत्पिञ्छदामाभिरामम् ।
वलभिदुपलनीलं वल्लवीभागधेयं
निखिलनिगमवल्लीमूलकन्दं मुकुन्दम् ॥ १० ॥

अयि चेतः हे मनः, प्रातरम्भोजे प्रातःकालीनकमले ते इव नेत्रे यस्य तम्, कबरे केशपाशे कलितेन वेष्टितेन चञ्चत्पिञ्छदाम्ना स्फुरद्बर्हमालया अभिरामं सुन्दरं वलभिदुपलनीलं वलभिदुपल इन्द्रनीलमणिः तद्वन्नीलं कृष्णवर्णम्, वल्लवीनां गोपीनां भागधेयं भाग्यम् । भागकार्ये भाग्यत्वमुपचारात् । 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । निखिलनिगमाः समस्तवेदाः त एव वल्ल्यः लताः तासां मूलकन्दं मूलकारणम् । 'यस्य निःश्वसितं वेदाः' 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतेः । मुकुन्दं कृष्णं परिचिनु परिचयं कुरु । सदा स्मरेत्यर्थः ॥ १० ॥

कस्याश्चिद्गोपिकायाः प्रार्थनां कविराह—

अयि मुरलि मुकुन्दस्मेरवक्त्रारविन्द-
श्वसनमधुरसज्ञे त्वां प्रणम्याद्य याचे ।

अधरमणिसमीपं प्राप्तवत्यां भवत्यां
कथय रहसि कर्णे मद्दशां नन्दसूनोः ॥ ११ ॥

मुकुन्दस्य कृष्णस्य स्मेरवक्त्रं मन्दहासयुतवक्त्रं तदेवारविन्दं तस्य श्वसनो निःश्वासः स एव मधु मकरन्दः। 'स्यात्क्षौद्रमकरन्दयोर्मधु' इति शब्दार्णवे। तस्य रसं जानातीति रसज्ञा तस्याः संबुद्धिः। 'इगुपधज्ञाप्रीकिरः कः' इति कः। अयि मुरलि हे वेणो, त्वां प्रणम्य याचे। 'नमस्कृत्य' इति वा पाठः। उभयथापि नार्थान्तरम्। भवत्यां त्वयि अधरो मणिरिव तस्य समीपं प्राप्तवत्यां प्राप्तायां सत्याम्। तवाधरसमीपप्राप्तिवेलायामिति यावत्। नन्दसूनोः कृष्णस्य कर्णे रहसि मद्दशां मदवस्थाम्; मदनबाधामिति यावत्। कथय वद। कामार्तानां चेतनाचेतनविवेको नास्तीति नानौचित्यम् ॥ ११ ॥

सजलजलदनीलं बल्लवीकेलिलोलं
श्रितसुरतरुमूलं विद्युदुल्लासिचेलम्।
नतसुरमुनिजालं सन्मनोबिम्बलीलं
सुररिपुकुलकालं नौमि गोपालबालम् ॥ १२ ॥

जलेन सह वर्तत इति सजलः। 'वोपसर्जनस्य' इति सहस्य सभावः। स चासौ जलदो मेघश्च तद्वन्नीलम्, बल्लवीकेलिलोलं बल्लवीकेलिषु गोपिकासंलापादिषु लोलं सतृष्णम्। 'लोलश्चलसतृष्णयोः' इत्यमरः। श्रितमाश्रितं सुरतरुमूलं कल्पवृक्षमूलं येन तम्, विद्युदिव तडिदिव उल्लासि प्रकाशमानं चेलं वस्त्रं यस्य तम्, सुराश्च मुनयश्च तेषां जालं समूहः नतं नम्रं सुरमुनिजालं यस्य तम्, सतां सत्पुरुषाणां मनःसु बिम्बाः साकाराः

लीलाः विलासाः यस्य तम् । सत्पुरुषैः सदा ध्यायमानविलासमित्यर्थः । 'लीला विलासक्रिययोः' इत्यमरः । मुररिपुः दनुजः तस्य कुले वंशः तस्य कालम्, यमवद्बाधकमित्यर्थः । गोपालबालं नौमि स्तुतिं करोमीत्यर्थः ॥ १२ ॥

अधरबिम्बविडम्बितविद्रुमं
मधुरवेणुनिनादविनोदिनम् ।
कमलकोमलकम्रमुखाम्बुजं
कमपि गोपकुमारमुपास्महे ॥ १३ ॥

अधरो बिम्बमिव तेन विडम्बितः अपहसितः विद्रुमः प्रवालः येन तम्, मधुरः श्राव्यः स चासौ वेणुनिनादश्च तेन तत्र वा विनोदिनम्, कमलवत्कोमले कम्रं कान्तं मुखाम्बुजं यस्य तम्, कमपि इत्थमिति वक्तुमशक्यं गोपकुमारं कृष्णम् उपास्महे ॥ १३ ॥

अधरे विनिवेश्य वंशनालं
विवराण्यस्य सलीलमङ्गुलीभिः ।
मुहुरन्तरयन्मुहुर्विवृण्व-
न्मधुरं गायति माधवो वनान्ते ॥ १४ ॥

माधवः श्रीकृष्णः अधरे वंशनालं वेणुं विनिवेश्य संस्थाप्य । 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वो ल्यबादेशः । अस्य वंशनालस्य विवराणि सुषिराणि लीलया विलासेन सहितं यथा तथा अङ्गुलीभिः मुहुः पुनः पुनः अन्तरयन्

विहितानि कुर्वन्, मुहुः पुनः पुनः विरचयन् विहृतानि, कुर्वन् वनान्ते वृन्दावनमध्ये मधुरं माधुर्यं यथा तथा गायति ॥ १४ ॥

वदने नवनीतगन्धवाहं
वचने तस्करचातुरीधुरीणम् ।
नयनेकुहनाश्रुमाश्रयेथा-
श्चरणेकोमलताण्डवं कुमारम् ॥ १५ ॥

वदने मुखे नवनीतगन्धं वहतीति नवनीतगन्धवाह्, तम् । 'वहश्च' इति क्विप्प्रत्ययः । वचने तस्करचातुरीभिः धुरीणं भारवन्तम् । तस्करचमत्कारवचोयुक्तमित्यर्थः । नयने नयनयोः कुहनाश्रु कपटरोदनं यस्य तम् । 'अमूर्धमस्तकात्स्वाङ्गादकामे' इति सप्तम्या अलुक् । चरणे पादयोः कोमलं मन्दं मनोहरं वा ताण्डवं नटनं यस्य तम् । पूर्ववत्सप्तम्या अलुक् । एवंविधं कुमारम् आश्रयेथाः सेवेथाः । आशिष्यर्थे हे मनः इत्यध्याहार्यम् । तथा च हे मनः सदा स्मरेत्यर्थः ॥ १५ ॥

अमुना किल गोपगोपनार्थे
यमुनारोधसि नन्दनन्दनेन ।
दमुना वनसंभवः पपे नः
किमु नासौ शरणार्थिनां शरण्यः ॥ १६ ॥

अमुना परिदृश्यमानेन नन्दनन्दनेन कृष्णेन यमुनारोधसि यमुनातीरे गोपानां गोपालबालकानां गोपनार्थं रक्षणार्थम्, वने संभव उत्पत्तिर्यस्य स तथोक्तः दमुनाः वह्निः । 'धूमध्वजदमुनाः शुक्रः' इत्यमरः । पपे किल

भीतिः किल । असौ श्रीकृष्णः शरणार्थिनां रक्षणं प्रार्थयमानानामस्माकं शरण्यः रक्षकः न किम्विति काकुः । रक्षको भवेदेवेत्यर्थः । साम्यबुद्ध्या विहरमाणानां रक्षकः दासबुद्ध्या वर्तमानानस्मान्किमिति न रक्षेत्? रक्षेदेवेति भावः ॥ १६ ॥

जगदादरणीयजारभावं
जलजापत्यवचोविचारगम्यम् ।
तनुतां तनुतां शिवेतराणां
सुरनाथोपलसुन्दरं महो नः ॥ १७ ॥

जगद्भिः समस्तलोकजनैः आदरणीयः सम्यगङ्गीकरणीयः जारभावः विटत्वं यस्य तम्, जलजापत्यं चतुर्मुखः तस्य वचांसि वेदान्ताः तेषां विचारः उत्तरमीमांसा तेन गम्यं ज्ञेयम्, सुरनाथोपलसुन्दरम् इन्द्रनीलवदतिसुन्दरम्, महः तेजः नः अस्माकं शिवानि शुभानि तानीतराणि येषां तेषामशुभानां तनोर्भावस्तनुता कार्श्यमित्यर्थः । तां तनुतां करोतु ॥

सा कापि सर्वजगतामभिरामसीमा
कामाय नो भवतु गोपकिशोरमूर्तिः ।
या शेखरे श्रुतिगिरां हृदि योगभाजां
पादाम्बुजे च सुलभा व्रजसुन्दरीणाम् ॥ १८ ॥

कापि इत्थमिति वक्तुमशक्या, सर्वजगतां समस्तजनानाम् अभिरामस्य सौन्दर्यस्य सीमा उत्तरावधिरित्यर्थः । गोपकिशोरमूर्तिः बालकृष्णमूर्तिः अस्माकं कामाय श्रेयसे भवतु । तां मूर्तिं विशिनष्टि— या शेखरे

इत्यादिना । या मूर्तिः श्रुतिगिरां वेदवाक्यानां शेखरे अन्ते, वेदान्ते इत्यर्थः । योगभाजां ब्रह्मनिष्ठानां हृदि मनसि, व्रजसुन्दरीणां नन्दव्रजधाम्णां पादाम्बुजे च सुलभा सौलभ्येन वर्तमाना, सा नः कामाय भवत्विति योजना ॥ १८ ॥

अत्यन्तबालमतसीकुसुमप्रकाशं
दिग्वाससं कनकभूषणभूषिताङ्गम् ।
विस्रस्तकेशमरुणाधरमायताक्षं
कृष्णं नमामि शिरसा वसुदेवसूनुम् ॥ १९ ॥

अत्यन्तबालम् अतिबालम्, अत एव दिग्वाससं दिगम्बरम् विस्रस्ताः अग्रथिताः केशाः यस्य तम्, अतसी क्षुमेति सस्यविशेषः । 'अतसी स्यादुमा क्षुमा' इत्यमरः । तस्याः कुसुमानां प्रकाश इव प्रकाशो यस्य तम्, कनकभूषणैर्भूषितानि अलंकृतानि अङ्गानि अवयवाः यस्य तम्, अरुणः रक्तवर्णः अधरः यस्य तम् । आयते दीर्घे अक्षिणी यस्य तम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच् । वसुदेवसूनुं कृष्णं शिरसा नमामि । 'मनसा नमामि' इति पाठे मत्तस्त्वमुत्कृष्टः त्वत्तोऽहमपकृष्ट इति सदा स्मरामीत्यर्थः ॥ १९ ॥

हस्ताङ्घ्रिनिक्वणितकङ्कणकिङ्किणीकं
मध्येनितम्बमवलम्बितहेमसूत्रम् ।
मुक्ताकलापमुकुलीकृतकाकपक्षं
वन्दामहे व्रजचरं वसुदेवभाग्यम् ॥ २० ॥

हस्तौ च भद्रौ पादौ च तत्र निक्वणिता ध्वनियुक्ताः कङ्कणकिङ्किणीकाः करभूषणमञ्जीरक्षुद्रघण्टिकाः यस्य तम् । हस्तयोर्निक्वणितकङ्कणं पादयोर्निक्वणितमञ्जीरकिङ्किणीकमित्यर्थः । नितम्बस्य कटेः पश्चाद्भागस्य मध्ये मध्येनितम्बम् । 'पारेमध्ये–' इति प्रथमानिर्दिष्टत्वान्मध्येशब्दस्य पूर्वनिपातः । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावसमासः । अवलम्बितमाश्रितं हेमसूत्रम् स्वर्णकाञ्ची यस्य तम् । इदमुपलक्षणम् ।
…पो मुक्तावलिः
… व्रजचरं नन्दव्रजे चरन्तम् । 'चरेष्टः' इति टप्रत्ययः । वसुदेवभाग्यं श्रीकृष्णम् । कार्ये कारणत्वमुपचारात् । वन्दामहे नमामः । 'वदि अभिवादनस्तुत्योः' ॥

**वृन्दावनद्रुमतलेषु गवां गणेषु**
**वेदावसानसमयेषु च दृश्यते यत् ।**
**तद्वेणुवादनपरं शिखिपिञ्छचूडं**
**ब्रह्म स्मरामि कमलेक्षणमभ्रनीलम् ॥ २१ ॥**

वृन्दावनद्रुमतलेषु वृन्दावनतरुच्छायास्वित्यर्थः । गवां गणेषु गोसन्दोहेषु, वेदावसानानि वेदान्ताः तेषां समयाः सिद्धान्ताः तेषु । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । यद्ब्रह्म दृश्यते तत्प्रसिद्ध वेणुवादने परमासक्तम्, शिखिपिञ्छं मयूरबर्हं चूडा शिरोभूषणं यस्य तत्, कमलवदीक्षणे यस्य तत्, अभ्रवन्मेघवत् नीलं ब्रह्म श्रीकृष्णं स्मरामि ॥

**व्यत्यस्तपादमवतंसितबर्हिबर्हं**
**साचीकृताननिवेशितवेणुरन्ध्रम् ।**

**तेजः परं परमकारुणिकं पुरस्ता-**
**त्प्राणप्रयाणसमये मम संनिधत्ताम् ॥ २२ ॥**

वामदक्षिणयोर्विद्यमानदक्षिणवामौ पादौ यस्य तत्, अवतंसितं शेखरीकृतम् । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे' इत्यमरः । अवतंसशब्दात्तत्करोतिण्यन्तात्कर्मणि क्तः । 'निष्ठायां सेटि' इति णेर्लोपः। बर्हिबर्हं मयूरबर्हं येन तत्, साचीकृतं तिर्यक्कृतं च तत् आननं च तस्मिन्निवेशितं प्राप्तं वेणुरन्ध्रं येन तत्, परमकारुणिकं परमदयालु, परमुत्कृष्टं तेजः मम प्राणप्रयाणं मरणं तस्य समये काले पुरस्तादग्रे संनिधत्तां संनिहितं भवतु ॥ २२ ॥

**घोषप्रघोषशमनाय मथो गुणेन**
**मध्ये बबन्ध जननी नवनीतचोरम् ।**
**तद्बन्धनं त्रिजगतामुदराश्रयाणा-**
**माक्रोशकारणमहो नितरां बभूव ॥ २३ ॥**

घोषस्य आभीरपल्ल्याः प्रकृष्टो घोषः प्रघोष आक्रोशः तस्य शमनाय शान्तये, कृष्णेन क्रियमाणचौर्यादिस्फोरकनन्दव्रजयोषिदाक्रोशनिवृत्तये इति यावत् । जननी माता, यशोदेत्यर्थः । नवनीतचोरं कृष्णं मध्ये अवलम्बे मथः मन्थानस्य, दधिमथनदण्डस्येति यावत् । 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः । मथः इति मथिन्शब्दस्य षष्ठ्येकवचनम् । गुणेन रज्ज्वा बबन्ध बन्धनं कृतवती । तत् बन्धनं कृष्णमध्ये कृत बन्धनम्, उदराश्रयाणां कुक्षिस्थानाम्, कृष्णस्येति शेषः । त्रिजगतो लोकत्रयस्य आक्रोशस्य वेदनामसहमानैः क्रियमाणस्य घोषस्य

कारणं नितरामस्वर्यं बभूव। एकजनपदस्योपद्रवनिवृत्तौ प्रसक्तायां सकलजगदुपद्रवो जात इति भावः ॥ २३ ॥

शैवा वयं न खलु तत्र विचारणीयं
पञ्चाक्षरीजपपरा नितरां तथापि ।
चेतो मदीयमतसीकुसुमावभासं
स्मेराननं स्मरति गोपवधूकिशोरम् ॥ २४ ॥

वयं पञ्चानामक्षराणां समाहारः पञ्चाक्षरी। 'द्विगोः' इति ङीप्। तस्या जपः मन्त्रः तत्र पराः आसक्ताः। शतरुद्रीयेऽष्टमानुवाके प्रतिपाद्यमानमन्त्रविशेषजपपरा इत्यर्थः। शिवसंबन्धिनः शैवाः। तत्र शिवसंबन्धित्वे न विचारणीयं खलु, विचारो न कर्तव्यः खलु। तथापि शिवसम्बन्धित्वे सत्यपि ममेदं मदीयम्। 'प्रत्ययोत्तरपदयोश्च' इति मादेशः। चेतः चित्तम्, अतसी उमेति सस्यविशेषः। 'अतसी स्यादुमा क्षुमा' इत्यमरः। तस्याः कुसुमं तस्यावभासः कान्तिरिव कान्तिर्यस्य तम्, स्मेरं मन्दहासयुक्तमाननं यस्य तं गोपवधूकिशोरं यशोदाशिशुं नितरामस्वर्यं स्मरति ॥ २४ ॥

राधा पुनातु जगदच्युतदत्तचित्ता
मन्थानमाकलयती दधिरिक्तपात्रे ।
तस्याः स्तनस्तबकचञ्चललोलदृष्टि-
र्देवोऽपि दोहनधिया वृषभं निरुन्धन् ॥ २५ ॥

अच्युतदत्तं चित्तं यया सा। सदा कृष्णं चिन्तयन्तीत्यर्थः। अत एव दध्ना रिक्तं शून्यं तच्च तत्पात्रं च तस्मिन् मन्थानं मन्थनदण्डम्। 'वैशा-

खमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः । आकलयन्ती भ्रमयन्ती राधा राधा नाम गोपकन्या जगत् भुवनं पुनातु पवित्रं करोतु । तस्या राधायाः स्तनौ स्तबकाविव गुच्छाविव तयोः चञ्चला पुनः पुनः प्रवर्तमाना लोला सतृष्णा । 'लोलश्चलसतृष्णयोः' इत्यमरः । हष्टिदर्शनं यस्य सः, अत एव दोहनधिया दोहनं करोमीति बुद्ध्या वृषभं निरुन्धन् वृषभपादबन्धनं कुर्वन् देवोऽपि कृष्णोऽपि जगत्पुनात्विति पूर्वेण संबन्धः ॥

गोधूलिधूसरितकोमलकुन्तलाग्रं
गोवर्धनोद्धरणकेलिकृतप्रयासम् ।
गोपीजनस्य कुचकुङ्कुममुद्रिताङ्गं
गोविन्दमिन्दुवदनं शरणं भजामः ॥ २६ ॥

गवां धूलयः गोधूलयः, गोखुरसंमर्दनवशाज्जायमानरेणव इत्यर्थः । ताभिः धूसरितानि कर्बुरीकृतानि । धूसरशब्दात्तत्करोतिण्यन्तात्कर्मणि क्तः । 'निष्ठायां सेटि' इति णेर्लोपः । कोमलानि मृदुलानि कुन्तलाग्राणि यस्य तम्, गोवर्धनः पर्वतविशेषः तस्योद्धरणं बाहुना छत्रवदुद्धरणम् । भावे ल्युट् । तदेव केलिर्विहारः तत्र कृतः प्रयासो येन तम्, गोपीजनस्य कुचयोः कुङ्कुममङ्गरागविशेषः तेन मुद्रितानि चिह्नितानि अङ्गानि उदरप्रभृत्यवयवा यस्य तम्, इन्दुवद्वदनं यस्य तम्, शरणं रक्षकं गोविन्दं भजामः सेवामहे ॥ २६ ॥

यद्रोमरन्ध्रपरिपूर्तिविधावदक्षा
वाराहजन्मनि बभूवुरमी समुद्राः ।

**तं नाम नाथमरविन्ददृशं यशोदा**
**पाणिद्वयान्तरजले स्नपयांबभूव ॥ २७ ॥**

वराहस्येदं वाराहम् । 'तस्येदम्' इत्यण् । तस्य तज्जन्म च तस्मिन्, वराहावतारे इत्यर्थः । अमी इदानीं विद्यमानाः समुद्राः यस्य कृष्णस्य रोम्णः रन्ध्रं सुषिरं तस्य पूर्तिः पूरणं तस्य विधिर्विधानं करणं तत्र अदक्षा असमर्था बभूवुः, तं प्रसिद्धम् अरविन्दवद्दृशौ यस्य तं नाथं यशोदा कर्त्री पाणिद्वयान्तरजलैः अञ्जलिमध्यस्थजलैः स्नपयांबभूव स्नानं कारितवती ॥ २७ ॥

**परमिममुपदेशमाद्रियध्वं**
**निगमवनेषु नितान्तचारखिन्नाः ।**
**विचिनुत भवनेषु वल्लवीना-**
**मुपनिषदर्थमुलूखले निबद्धम् ॥ २८ ॥**

निगमा वेदान्ता वनानीव, दुष्प्रवेशत्वादिति भावः । तेषु नितान्तचारः अधिकपरिशीलनं श्रवणादिभिरित्यर्थः । तेन खिन्नाः श्रान्ताः तेषां संबोधनम् । परमुत्कृष्टम् इमम् उपदेशं मदुच्यमानं वचः आद्रियध्वम् आदृतं कुरुध्वम् । तमुपदेशमेवाह— विचिनुतेति । वल्लवीनां गोपिकानां भवनेषु गृहेषु उलूखले तण्डुलाद्यवहननार्थं संपादितदार्वादिविशेषे निबद्धम्, नवनीतचौर्यादिति भावः । उपनिषदां वेदान्तानामर्थम्, लक्ष्यमित्यर्थः । कृष्णमिति यावत् । विचिनुत अन्वेषणं कुरुत । वेदान्तविचारे प्रयासं विना झटिति ज्ञातुं न शक्यते, वल्लवीगृहेषु चेच्छीघ्रं प्रयासं विनैव ज्ञातुं शक्यत इति उपदेशस्योत्कृष्टत्वमिति भावः ॥ २८ ॥

देवकीतनयपूजनपूतः
पूतनारिचरणोदकधौतः ।
यद्यहं स्मृतधनंजयसूतः
किं करिष्यति स मे यमदूतः ॥ २९ ॥

अहं देवकीतनयस्य कृष्णस्य पूजनं पूजा तेन पूतः, पूतनारेः श्रीकृष्णस्य चरणोदकं पादनिर्णेजकजलं गङ्गोदकं वा तेन धौतः विमलीकृतः, स्मृतः धनंजयस्य अर्जुनस्य सूतः सारथिः कृष्णो येन स तथोक्तः यदि, उक्तविशेषणविशिष्टो यदि स्यामित्यर्थः । मे मम स प्रसिद्धः यमदूतः किं करिष्यति, किमपि न करिष्यतीत्यर्थः । कृष्णभक्तस्य किमपि दुरितं नास्तीति भावः ॥ २९ ॥

भासतां भवभयैकभेषजं
मानसे मम मुहुर्मुहुर्मुहुः ।
गोपवेषमुपसेदुषः स्वयं
यापि कापि रमणीयता विभोः ॥ ३० ॥

भवभयस्य संसारभयस्य एकं मुख्यम् । 'एके मुख्यान्यकेवलाः' इत्यमरः । तच्च तद्भेषजमौषधम्, स्वयं स्वयमेव गोपवेषं गोपालभावम् उपसेदुषः प्राप्तस्य । सदेर्लिटः क्वसुन् । द्विर्भावः । 'अत एकहल्मध्ये–' इत्येत्वाभ्यासलोपौ । संप्रसारणनिमित्तस्य वकारस्याभावान्नैमित्तिकस्येटो निवृत्तिः । इतरेषां गोपभावः अदृष्टाधीनः, कृष्णस्य तु स्वाधीन इति भावः । विभोः कृष्णस्य यापि कापि निर्वक्तुमशक्या रमणीयता सौन्दर्यं मम मानसे मुहुर्मुहुर्मुहुः । संभ्रमेण चह्रूक्तिः । भासतां प्रकाशताम् ॥

कर्णलम्बितकदम्बमञ्जरी-
केसरारुणकपोलमण्डलम् ।
निर्मलं निगमवागगोचरं
नीलिमानमवलोकयामहे ॥ ३१ ॥

कर्णयोः लम्बिताः लम्बमानाः कदम्बस्य नीपस्य मञ्जर्यः स्तबकाः 'मञ्जर्यः स्त्रियां गुलुञ्छगुच्छस्तबकाः' इति शब्दार्णवे । तासां केसराः किञ्जल्काः । 'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः । तैररुणं रक्तवर्णं कपोलयोः गण्डयोः मण्डलं प्रदेशो यस्य तम्, निर्मलं स्वच्छम्, निगमवाचां वेदान्तानाम् अगोचरम् अविषयम्, शक्त्याद्विकया प्रतिपादयितुमशक्यमित्यर्थः । तथा च श्रुतिः— 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति । नीलिमानं नैल्यम् । 'वर्णदृढादिभ्यः ष्यञ्च' इति भावे इमनिच् । श्रीकृष्णमित्यर्थः । अवलोकयामहे पश्याम इत्यर्थः ॥

साचिसंचलितलोचनान्तरं
सामिकुड्मलितकोमलाधरम् ।
वेगवल्गितकराङ्गुलीमुखं
वेणुनादरसिकं भजामहे ॥ ३२ ॥

साचिसंचलिते तिर्यक् चञ्चलिते लोचने उत्पल इव नयने येन तम्, सामिकुड्मलितः अर्धमुकुलितः । 'सामि त्वर्धे जुगुप्सिते' इत्यमरः । कुड्मलशब्दात्कर्मणि क्तः । 'निष्ठायां सेटि' इति णिलोपः । सामीति क्तान्तेन समासः । कोमलः मृदुलः अधरः येन तम्, वेगं यथा तथा वल्गितानि पुनः पुनरुत्पत्य पतितानि करयोरङ्गुलीनां मुखानि अग्राणि

मस्य तम्, वेणुनादरसिकं वेणुनादस्य सारग्राहिणं भजामहे सेवामहे ॥

स्यन्दने गरुडमण्डितध्वजे
कुण्डिनेशतनयाधिरोपिता ।
केनचिन्नवतमालपल्लव-
श्यामलेन पुरुषेण नीयते ॥ ३३ ॥

कुण्डिनं पत्तनविशेषः तस्य ईशः अधिपतिः तस्य तनया पुत्रिका रुक्मिणीत्यर्थः । गरुडेन मण्डितः अलङ्कृतः ध्वजः चिह्नं यस्य तस्मिन् । 'पालिः केतुर्ध्वजो लिङ्गं निमित्तं व्यञ्जनं पदम्' इत्यमरः । स्यन्दने रथे, नवः नूतनः तमालस्य तापिञ्छस्य वृक्षविशेषस्य पल्लवः किसलयः तद्वत् श्यामलेन नीलवर्णेन केनचित्पुरुषेण, कृष्णेनेत्यर्थः । अधिरोपिता सती नीयते प्राप्यते ॥ ३३ ॥

मा यात पान्थाः पथि भीमरथ्या
दिगम्बरः कोऽपि तमालनीलः ।
विन्यस्तहस्तोऽपि नितम्बबिम्बे
धूर्तः समाकर्षति चित्तवित्तम् ॥ ३४ ॥

हे पान्थाः पथिकाः, भीमरथ्याः नदीविशेषस्य पथि मार्गे मा यात मा गच्छत । तत्र किमर्थं न गन्तव्यमित्याशङ्क्य बाधकमाह— दिगम्बर इति । पीताम्बर इत्यपि पाठान्तरम् । तमालः तापिञ्छः तद्वन्नीलः दिगम्बरः अवाससः कोऽपि यः कश्चित् धूर्तः दुर्जनः नितम्बबिम्बे कटिप्रदेशविशेषे विन्यस्तहस्तोऽपि दत्तहस्तः सन्नपि अनेन व्यापारलेशं विनेति

सूच्यते । चित्तवित्त मनोरूपद्रव्यं समाकर्षति सम्यक् गृह्णाति ॥ ३४ ॥

अङ्गनामङ्गनामन्तरे माधवो
माधवं माधवं चान्तरेणाङ्गना ।
इत्थमाकल्पिते मण्डले मध्यगः
संजगौ वेणुना देवकीनन्दनः ॥ ३५ ॥

*अङ्गनामङ्गनाम् अङ्गनाया अङ्गनायाः । वीप्सार्थे द्विर्भावः ।* द्वयोरङ्गनयोरित्यर्थः । 'अन्तरान्तरेण युक्ते' इति द्वितीया । अन्तरे मध्ये माधवः कृष्णः । माधवं माधवम् । अत्रापि वीप्सार्थे द्विर्भावः । अन्तरेण विना च अङ्गना च । अयमर्थः—एकाङ्गना तदनन्तरं कृष्णः तदनन्तरमङ्गना तदनन्तरं कृष्णः तदनन्तरमङ्गनेति । इत्थम् अनेन पूर्वोक्तप्रकारेण *आकल्पिते* रचिते *मण्डले* समूहमध्ये *विद्यमानगोपिकापाणीन् गृहीत्वा* वलयाकारेण विद्यमान इत्यर्थः । देवकीनन्दनः मध्यगः सन् मध्यप्रदेशं गतः सन् मध्यनाम ध्वनिविशेषं प्राप्य वेणुना संजगौ सम्यग्गानं कृतवान् ॥

केकिकेकादृतानेकपङ्केरुहा-
लीनहंसावलीहृद्यताहृद्यता ।
कंसवंशाटवीदाहदावानलः
संजगौ वेणुना देवकीनन्दनः ॥ ३६ ॥

केका एषु सन्तीति केकिनः मयूराः । व्रीह्यादित्वादिनिः । 'केका वाणी मयूरस्य' इत्यमरः । तेषां केकाः तासामादृतमादरणम्, *श्रवणमिति* यवात् । भावे निष्ठा । तेन अनेकानि विविधानि पङ्केरुहाणि कमलादीनि

येषां तेभ्यः सरोभ्यः अलीना उड्डीनाः ते च ते हंसाश्च तेषामावलयः पङ्क्तयः तासां हृषता संतोषः तामाहरति संपादयतीत्याहृत् वेणुनाद इत्यर्थः । हरतेः 'क्विप् च' इति क्विप् । तम् एति प्राप्नोतीति यन् । 'इण् गतौ' इत्यस्माद्धटः शत्रादेशः । तेन वेणुना । कृष्णं दृष्ट्वा मेघबुद्ध्या मयूरकेकारवेषु सत्सु तच्छ्रवणहेतुककृष्णदर्शने सति वर्षर्तुबुद्ध्या सरांसि विहाय गतानां हंसावलीनां नायं मेघः किं तु कृष्ण इति संतोषसंपादकध्वानियुक्तवेणुना इत्यर्थः । कंसवंशः कंसान्वयः स एवाटवी तस्या दाहो दहनं तत्कृद्दावानलः वनसंभववह्निः देवकीनन्दनः संजगौ ॥ ३६ ॥

क्वापि वीणाभिराराविणा कम्पितः
क्वापि वीणाभिराकिङ्किणीनर्तितः ।
क्वापि वीणाभिरामान्तरं गापितः
संजगौ वेणुना देवकीनन्दनः ॥ ३७ ॥

देवकीनन्दनः क्वापि कुत्रचित्प्रदेशे वीणाभिर्वल्लकीभिः आराविणा गानवता ज्ञानेन कम्पितः नाट्यं प्रापितः सन् वेणुना सजगौ । क्वापि कुत्रचित्प्रदेशे वीणा अभिरान्ति आददत इति वीणाभिराः । रा आदाने इत्यस्मात्क्विप् । वीणानुगुण्येन ध्वानिं कुर्वन्त्य इति यावत् । ताश्च ताः किङ्किण्यश्च ताभिः सह नर्तनं प्रापितः नर्तितः सन् जगौ । क्वापि कुत्रचित्प्रदेशे वीणाभिरामाणि अन्तराणि गानविशेषा यस्मिन्कर्मणि तथा तथा गापितः गानविशेषं प्रापितः । कृदन्तत्वात् 'अर्तिह्री—' इत्यादिना पुगागमः । संजगौ । नृत्यत इति पाठे नर्तनं कुर्वतो ज्ञानात्, गायत इति पाठे गानं कुर्वतो ज्ञानादेतोरिति ज्ञेयम् ॥ ३७ ॥

चारुचन्द्रावलीलोचनैश्चुम्बितो
　गोपगोवृन्दगोपालिकावल्लभः ।
वल्लवीवृन्दवृन्दारकः कामुकः
　संजगौ वेणुना देवकीनन्दनः ॥ ३८ ॥

देवकनिन्दनः चारूणि चन्द्राणि हेमविभूषणविशेषा यासां तास्तथोक्ताः । 'चन्द्रः शशिनि कर्पूरे तरौ हेम्नि नपुंसकम्' इति शब्दार्णवे । समीचीनविभूषणयुक्ता इत्यर्थः । तासामावल्यः पङ्क्तयः तासां लोचनैश्चुम्बितः अत्यादरेण दृष्टः, गोपाश्च गावश्च तासां बृन्दानि समूहाः गोपालिकाश्च । 'प्रत्ययस्थात् –' इत्यादिना इकारादेशः । 'परवल्लिङ्गम्—' इति स्त्रीलिङ्गता । तासां वल्लभः प्रियः । वल्लवीवृन्दानां गोपस्त्रीसमूहानां वृन्दारकः दैवतम्, कामुकः गोपस्त्रियः कामयमानः सन् वेणुना संजगौ गानं कृतवान् ॥ ३८ ॥

मौलिमालात्वसन्मत्तभृङ्गीलता-
　भीतभीतप्रियाविभ्रमालिङ्गितः ।
स्रस्तगोपीकुचाभोगसंमेलितः
　संजगौ वेणुना देवकीनन्दनः ॥ ३९ ॥

देवकीनन्दनः मौलिः चूडा । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः । तत्र मालाः तासु लसन्त्यः संगताः, ताश्च ताः मत्तभृङ्ग्यश्च लता इव, ताभ्यो भीतभीता अत्यन्तं भीताः । आभीक्ष्ण्याद्विरुक्तिः । कर्मधारयत्वात् 'पुंवत्कर्मधारय–' इति पुंवद्भावः । ताभिः प्रियाभिः विभ्रमं विलासं यथा तथा आलिङ्गितः, स्रस्ताः गलदंशुकाः ।

सात्त्विकोदयादिति भावः। तादृच ता गोप्यश्च ताभिः कुचाभोगेन कुचमण्डलेन संमेलितः संश्लेषितः सन् वेणुना सन् वेणुना संजगौ ॥ ३९ ॥

चारुचामीकराभासभामाविभु-
वैजयन्तीलताभासितोरःस्थलः।
नन्दबृन्दावने वासितामध्यगः
संजगौ वेणुना देवकीनन्दनः ॥ ४० ॥

चारुचामीकरं शुद्धसुवर्णम्, तस्याभासः कान्तिरिव कान्तिर्यस्याः सा तथोक्ता, सा चासौ भामा च, तस्या विभुः, लक्ष्मीपतिरित्यर्थः। वैजयन्ती मालिकाविशेषः, सा लतेव, तया भासितं प्रकाशितम्। 'वासित' इति पाठे वासितं परिमलितमित्यर्थः। नन्दबृन्दावने वासिताना मध्यगः सन् वेणुना संजगौ ॥ ४० ॥

बालिकातालिकाताललीलालया-
सङ्गसंदर्शितभ्रूलताविभ्रमः।
गोपिकागीतदत्तावधानः स्वयं
संजगौ वेणुना देवकीनन्दनः ॥ ४१ ॥

बालिका गोपालिकाः, ता एव तालिकाः, भरतशास्त्रप्रतिपाद्यतालयुक्ताः। 'अत इनि ठनौ' इति ठन्। तासां ताललीला, तस्या लयः न्यूनाधिकराहित्यं तस्य आसङ्गः संबन्धः, तस्य संदर्शितः भ्रूलताया विभ्रमो विलासो येन सः। स्वस्य नर्तनवेलायां तालस्य परिपूर्णतायां सत्यां सम्यगिति भ्रूविक्षेपं कृतवानित्यर्थः। देवकीनन्दन स्वयं गोपिकानां

गीते गाने दत्तमवधानं तत्परत्वं येन स तथोक्तः सन् वेणुना संजगौ ॥

पारिजातं समुद्धृत्य राधावयो-
रूपया मासभासा गुणैरङ्गणे ।
शीतशीते वटे यामुनीये तटे
संजगौ वेणुना देवकीनन्दनः ॥ ४१ ॥

राधाया गोपिकाविशेषस्य, यद्वा राध्यत इति राधा स्वेनाराध्यमाना लक्ष्मीरित्यर्थः । विष्णुना आराध्यमानाया लक्ष्मीत्वादिति भावः । तस्या वयः रूपमवयवसौष्ठवं च तद्वयोरूपे यस्याः सा तथोक्ता तया, लक्ष्मीवयोरूपतुल्यवयोरूपयुक्तयेत्यर्थः । गुणैः सौन्दर्यादिगुणैः मासा लक्ष्म्याः समाना भाः कान्तिर्यस्याः सा मासभाः तया, निमित्तभूतया कयाचित्स्त्रियेत्यर्थः । अङ्गणे चत्वरे । गृहपुरोभाग इत्यर्थः । पारिजातं समुद्धृत्य सम्यक्संस्थाप्य यमुनायाः संबन्धिनि यामुनीये तटे शीतशीते अतिशीतले । आभीक्ष्ण्ये द्विरुक्तिः । कर्मधारयत्वात्सुब्लोपः । वटे न्यग्रोधे । यमुनातीरविद्यमानभाण्डीरवटच्छायायामित्यर्थः । वेणुना संजगौ ॥ ४२ ॥

अग्रे दीर्घतरोऽयमर्जुनतरुस्तस्याग्रतो वर्तनी
सा घोषं समुपैति तत्परिसरे देशे कलिन्दात्मजा ।
तस्यास्तीरतमालकाननतले चक्रं गवां चारय-
न्गोपः क्रीडति दर्शयिष्यति सखे पन्थानमव्याहतम् ॥

हे सखे, अग्रे पुरः अयं परिदृश्यमानः दीर्घतरः अतिशयेन दीर्घः ।

'द्विवन-' इत्यादिना तरप् । अर्जुनतरुः ककुभ इति वृक्षविशेषः । 'ककुभोऽर्जुनः' इत्यमरः । तस्य अर्जुनवृक्षस्य अग्रतः पुरतः वर्तनी एकपदी मार्गविशेषः । सा वर्तनी घोषं नन्दव्रजं समुपैति प्राप्नोति । तस्य घोषस्य परिसरे देशे कलिन्दात्मजा यमुना । तस्या यमुनायाः तीरतमालकाननानि तेषां तले प्रदेशे गवां पशूनां चक्रं समूहं चारयन् कर्दयन्निति वा । गोपः गोपवेषः कृष्णः क्रीडति विहरति सः अव्याहत-मक्षत पन्थानं मार्गं दर्शयिष्यति दर्शनं करिष्यति । त्वमिति शेषः । एवमक्षरार्थः । तात्पर्यविषयीभूतार्थस्तु— संसारगहनं प्रविश्य पुण्यपापाभ्यां संपादितैर्मार्गविशेषैर्गत्वा परिभ्रममाणः पुनः पुनः संसारगहनमेव प्रविश्यातिदुःखितं जीवं प्रतिनिवर्त्य मार्गोपदेष्टारमुपादिशति— अग्र इति । हे सखे, अग्रे रथाग्रे दीर्घतरः महोन्नतः अयं प्रसिद्धः अर्जुनः तरुरिव स तथोक्तः । बन्धुवधजनितदोषो मम भवेदिति भयात्तरुरिव विद्यमान इत्यर्थः । तस्य अर्जुनस्याग्रतः पुरोभागे वर्तनी उक्तिः उपदेश इति यावत् । मार्गप्रदर्शिकाया उक्तेर्मार्गत्वेन व्यपदेशः । सा उक्तिः घोषं शब्दम् । उपनिषदमित्यर्थः । घोषशब्देन घोषवच्छब्दव्यपदेशः । समुपैति प्राप्नोति । अर्जुनकर्मकवेदान्तोपदेश इति प्रघट्टार्थः । तत्परिसरे देशे वेदान्तोपदेशसंनिधिदेशे कलिन्दात्मजा । तस्यास्तीरतमालकाननतल इति नीलकान्तिस्तोमप्रदेश उक्तः । तास्मिन्न्यवामुपनिषद्वाक्यानां चक्रं समूहं चारयन् गोपः श्रीकृष्णः क्रीडति विहरति । सः अव्याहतमनिवर्तकं पन्थानं मार्गं दर्शयिष्यति दर्शनं कारयिष्यति, तदेव मोक्षमार्गभूतं ज्ञानं संपादयतीत्यर्थः । एवप्रकारव्यानेन तत्त्वज्ञानापरपर्यायं सर्वज्ञत्वं भवतोऽस्त्वभिप्रायः ॥ ४३ ॥

गोधूलिधूसरितकोमलगोपवेषं
गोपालबालकशतैरनुगम्यमानम् ।

सायन्तने प्रतिगृहं पशुबन्धनार्थं
गच्छन्तमच्युतशिशुं प्रणतोऽस्मि नित्यम् ॥

गवां धूलयः गोखुरसमर्दजन्यरेणव इत्यर्थः । ताभिर्धूसरितः कर्बुरीकृतः । धूसरशब्दात्तत्करोतिण्यन्तात्कर्मणि क्तः । 'निष्ठायां सेटि' इति णिलोपः । कोमलो मृदुलः गोपवेषो गोपालाकृतिर्यस्य तम्, गोपालाश्च ते बालकाश्च तेषां शतैरनुगम्यमानमनुसृतम्, सायन्तने सायंकाले पशुबन्धनार्थं गवा बन्धनार्थं गृहं गृहं प्रति प्रतिगृहम् । वीप्सार्थेऽव्ययीभावः । गच्छन्तम्, अच्युतश्चासौ शिशुश्च तं प्रति नित्यं सदा प्रणतः प्रकर्षेण नम्रोऽस्मि भवामि । तं नमस्करोमीत्यर्थः ॥ ४४ ॥

निधिं लावण्यानां निखिलजगदाश्चर्यनिलयं
निजावासं भासां निरवधिकनिःश्रेयसरसम् ।
सुधाधारासारं सुकृतपरिपाकं मृगदृशां
प्रपद्ये माङ्गल्यं प्रथममधिदैवं कृतधियाम् ॥ ४५ ॥

लावण्यानां मुक्ताफलेषु प्रतीयमानच्छायातारल्यमिव प्रतीयमानावयवनिष्ठच्छायातारल्यानां कान्तिविशेषाणामित्यर्थः । निधिमाकरम्, निखिलजगतां समस्तलोकानामाश्चर्याणि अद्भुतानि तेषां निलयं गृहम्, भासां प्रभाविशेषाणां निजावासं स्वगृहम्, निर्गतः अवधिर्यस्मात्स निरवधिकः स चासौ निःश्रेयसरसश्च तम्, निरतिशयानन्दस्वरूपमित्यर्थः । सुधाधारासारं सुधायाः संततपतनस्वरूपम्, मृगाणां दृशाविव दृशौ नेत्रे यासां तासां सुकृतस्य परिपाकं फलस्वरूपम्, कृतधियां विदुषाम्, श्रवणादिमतामिति यावत् । मङ्गलमेव माङ्गल्यम् । स्वार्थे

ध्यइ्। शुभस्वरूपम् अधिदैवं अधिपतिं प्रथमं जगदभिन्ननिमित्तोपादानकारणभूतं कृष्णमित्यर्थः । प्रपद्ये सेवे ॥ ४५ ॥

आताम्रपाणिकमलप्रणयप्रतोद-
 मालोलहारमणिकुण्डलहेमसूत्रम् ।
आविःश्रमाम्बुकणमम्बुदनीलमव्या-
 दाद्यं धनंजयरथाभरणं महो नः ॥ ४६ ॥

*आताम्रं समन्तात्ताम्रं पाणिः कमलमिव तत्र प्रणयः प्रेम यस्य स तथोक्तः ।* प्रतोदः अश्वप्रेरककशाविशेषो यस्य तत्, आलोलानि हाराश्च मणिकुण्डले च हेमसूत्रं च तानि यस्य तत्, आविः प्रकाशमाना श्रमाम्बुकणाः स्वेदबिन्दवो यस्य तत्, अम्बुदनीलम्, धनंजयरथस्य अर्जुनरथस्य आभरणम्, आद्यं भारतयुद्धस्य प्रथमं कारणम् । अनेनार्जुनं प्रति तत्त्वमुपदिष्टमुक्तम् । महः तेजः नः अस्मान् अव्यात् रक्षतु ॥

नखनियमितकण्डून्पाण्डवस्यन्दनाश्वा-
 ननुदिनमभिषिञ्चन्नञ्जलिस्थैः पयोभिः ।
अवतु विततगात्रस्तोत्रसंस्यूतमौलि-
 र्दशनविधृतरश्मिर्देवकीपुण्यराशिः ॥ ४७ ॥

*दशनैर्दन्तैः विधृता ध्रियमाणाः, दष्टा इत्यर्थः । रश्मयः प्रग्रहाः येन सः ।* 'किरणप्रग्रहौ रश्मी' इत्यमरः । तोत्रेण कशया संस्यूतः समुद्ग्रथितः मौलिः शिखा येन सः । एवंभूतः सन् नखैः नियमिता उत्सारिता कण्डूः कण्डूतिर्येषां तान् पाण्डवस्य अर्जुनस्य स्यन्दनाश्वान् रथतुरगान्

अञ्जलिस्थैः पयोभिः जलैः दिने दिने अनुदिनम् । वीप्सायेऽव्ययीभावः । अभिषिञ्चन् क्षालयन्, विततं विस्तृतं गात्रं शरीरं यस्य सः, देवकी-पुण्यानां राशिः, श्रीकृष्ण इत्यर्थः । कार्ये कारणत्वमुपचारात् । अवतु रक्षतु । अस्मानिति शेषः ॥ ४७ ॥'

**व्रजयुवतिसहाये यौवनोल्लासिकाये**
**सकलशुभविलासे कुन्दमन्दारहासे ।**
**निवसतु मम चित्तं तत्पदायत्तवृत्तं**
**मुनिसरसिजभानौ नन्दगोपस्य सूनौ ॥ ४८ ॥**

व्रजयुवतीनां सहाये, यौवने उल्लसितुं प्रकाशितुं शीलमस्यास्तीत्युल्लासी । ताच्छील्ये णिनिः । 'सुपीत्यनुवृत्तौ पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम्' इत्यस्य केवलोपसर्गनिवृत्तौ तात्पर्यम्, न तु सोपदस्येति जयमङ्गलायाम् । अत एव भट्टिकाव्ये अकर्मसुतानुबन्धीति । कायो देहो यस्य तस्मिन्, सकलाः समस्ताः शुभानां विलासा यस्य तस्मिन्, कुन्दानि च मन्दाराणि च कुन्दमन्दारकुसुमानी-त्यर्थः । '*अवयवे च प्राण्यौषधिवृक्षेभ्यः*' इत्यवयवेऽण् । 'पुष्पफल-मूलेषु बहुलम्' इति लुक् । तानीव हासो यस्य तस्मिन्, मुनय एव सरसिजानि कमलानि तेषां भानुः सूर्यः । 'भानू रश्मिदिवाकरौ' इत्यमरः । तस्मिन् नन्दगोपस्य सूनौ, तस्य कृष्णस्य पदयोः आयत्त-मधीनं वृत्तं वर्तनं यस्य तत् मम चित्तं निवसतु तिष्ठतु ॥ ४८ ॥

**अरण्यानीमार्द्रस्मितमधुरबिम्बाधरसुधा-**
**सरण्या संक्रान्तैः सपदि मदयन्वेणुनिनदैः ।**

धरण्या सानन्दोत्पुलकमुपगूढाङ्घ्रिकमलः
शरण्यानामाद्यः स जयतु शरीरी मधुरिमा ॥ ४९ ॥

आर्द्रं सरसं तच्च तत्स्मितं च तेन मधुरो हृद्यो विम्बाधरः तस्य सुधासरण्या माधुर्यप्रवाहेण संक्रान्तैः संसर्कैः, यद्वा बिम्बाधरसुधायां बिम्बाधरमाधुर्ये सरणिमार्गैः तया संक्रान्तैः सम्यगागतैः । मधुराधर-प्रदेशात उत्पन्नैरित्यर्थः । वेणुनिनदैः अरण्यानीं महारण्यम् । वृन्दावनस्थ-प्राणिन इत्यर्थः । 'इन्द्रवरुण—' इत्यादिना आनुगागमः ङीप् । सपदि तदानीमेव । वेणुनादजनन एवेत्यर्थः । मदयन् मदवतीं कुर्वन् । तत्करोतिण्यन्ताल्लटः शत्रादेशः । इष्ठवद्भावान्मतुब्लोपः । धरण्या भूम्या आनन्दश्च उत्पुलको रोमाञ्चश्च ताभ्यां सहितं यथा तथा उपगूढे आ-लिङ्गिते अङ्घ्री कमले इव यस्य सः, शरणे रक्षणे साधवः शरण्या तेषामाद्यः प्रथमः । शरीरमस्यास्तीति शरीरी, सः प्रसिद्धः मधुरिमा माधुर्यम् । दृढादित्वाद्भावे ष्यञ् । 'दृढादिभ्यः' इतीमनिच् । जयति सर्वोत्कर्षेण वर्तते ॥ ४९ ॥

मुग्धं स्निग्धं मधुरमुरलीमाधुरीधीरनादैः
कारं कारं करणविवशं गोकुलं व्याकुलत्वम् ।
श्यामं कामं युवजनमनोमोहनं मोहनत्वं
चित्ते नित्यं निवसतु महो वल्लवीवल्लभं नः ॥ ५० ॥

मुग्धं सुन्दरम्, स्निग्धं स्वच्छम्, श्यामं नीलवर्णम्, मधुरैः श्राव्यैः मुरल्या वेणोः माधुर्या सौष्ठवेन धीरनादैः गम्भीरनिनदैः विविधमाकुलत्वं यस्य तत्, भक्षणार्थं त्वरया तत्र तत्र संचरादित्यर्थः । गोकुलं गोसमूहं

करणेष्विन्द्रियेषु विवशं परतन्त्रं कारं कारं कृत्वा कृत्वा । 'आभीक्ष्ण्ये णमुल्च' इति णमुल् । 'नित्यवीप्सयोः' इति द्विर्भावः । काममलर्थं युवतय एव जनाः । 'पुंवत्कर्मधारय-' इत्यादिना पुंवत्त्वात्स्त्रीप्रत्ययलोपः । तेषां मनांसि तेषां मोहनं मोहसंपादकम्, वेणुनादेन गोपीजनमोहसंपादकम्, वल्लवीनां वल्लभं प्रियं महः नः अस्माकं चित्ते मोहनत्वं स्वविषयानुरागविशेषं कारं कारं कृत्वा कृत्वा । कारं कारमिति पदमत्रानुषञ्जनीयम् । नित्यमाविरस्तु वसतु ॥ ५० ॥

विदग्धगोपालविलासिनीनां
संभोगचिह्नाङ्कितसर्वगात्रम् ।
पवित्रमाम्नायगिरामगम्यं
ब्रह्म प्रपद्ये नवनीतचोरम् ॥ ५१ ॥

विदग्धानां प्रौढानां गोपालविलासिनीनां गोपस्त्रीणां संभोगचिह्नानि संभोगसूचकानि कुङ्कुमादीनीति यावत् । तैरङ्कितं चिह्नितम् । तत्करोति-ण्यन्तादङ्कशब्दात्कर्मणि क्तः । सर्वगात्रं समस्तशरीरं यस्य तत्, अथापि पवित्रम्, नवनीतचोरम्, अथापि वेदान्तगिरां वेदान्तवाक्यानाम् । 'कृत्यानां कर्तरि वा' इति षष्ठी । अगम्यम् अभिधया अप्रतिपाद्यं ब्रह्म । श्रीकृष्णमित्यर्थः । प्रपद्ये आश्रये ॥ ५१ ॥

आनन्देन यशोदया समदनं गोपाङ्गनाभिश्चिरं
साशङ्कं बलविद्विषा सकुसुमैः सिद्धैः पथि व्याकुलम् ।
सेर्ष्यं गोपकुमारकैः सकरुणं पौरैर्जनैः सस्मितं
यो दृष्टः स पुनातु नो मुररिपुः प्रोत्क्षिप्तगोवर्धनः ॥

यशोदया आनन्देन संतोषेण, गोपाङ्गनाभिः मदेन सहितं यथा तथा, बलविद्विषा इन्द्रेण आशङ्कया सहितं यथा तथा, कुसुमैः सहितैः सिद्धैः पथि स्वमार्गे, अन्तरिक्षे इति यावत्। विशेषेणाकुलं यथा तथा, गोपकुमारकैः ईर्ष्यया सहितं यथा तथा, पौरैः पत्तनस्थैर्जनैः करुणया दयया सहितं यथा तथा, एतैः सर्वैः सास्मितं यथा तथा, चिरं यो मुररिपुः प्रोक्षिप्तगोवर्धनः सन् दृष्टः, सः नः अस्मान् पातु ॥ ५१ ॥

अन्तर्गृहे कृष्णमवेक्ष्य चोरं
बध्वा कवाटं जननीं गतैका।
उलूखले दामनिबद्धमेनं
तत्रापि दृष्ट्वा स्तिमिता बभूव ॥ ५३ ॥

एका गोपिका अन्तर्गृहे स्वगृहमध्ये चोरं नवनीतादिचौर्यं कुर्वन्तं कृष्णमवेक्ष्य दृष्ट्वा अयमत्रैव तिष्ठत्विति कवाटं बद्ध्वा जननीं यशोदां गता प्राप्ता। आक्रोशं करिष्यामीति भावः। तत्रापि जननीसंनिधानेऽपि उलूखले दाम्ना रज्ज्वा नितरां बद्धं निबद्धम् एनम्। 'द्वितीयाटौस्स्वेनः' इत्यन्वादेशवशादेनादेशः। दृष्ट्वा स्तिमिता, किमपि वक्तुमसमर्थेत्यर्थः। बभूव जाता ॥ ५३ ॥

रत्नस्थले जानुचरः कुमारः
संक्रान्तमात्मीयमुखारविन्दम्।
आदातुकामस्तदलाभखेदा-
द्विलोक्य धात्रीवदनं रुरोद ॥ ५४ ॥

जानुभ्यां चरतीति जानुचरः कुमारः बालकृष्णः रत्नस्थले संक्रान्तं प्रतिबिम्बितं आत्मन इदमात्मीयं मुखारविन्दम् आदातुकामः ग्रहीतुकामः सन् । 'तुं काममनसोरपि' इति तुमुनो मकारस्य लोपः । तस्य मुखस्यालाभः अप्राप्तिः, तेन खेदात् धाव्या उपमातुः वदनं विलोक्य रुरोद रोदनं कृतवान्, रोदनं भावितवानित्यर्थः ॥ ५४ ॥

उपासतामात्मविदः पुराणाः
परं परस्तान्निहितं गुहायाम् ।
वयं यशोदाशिशुबाललीला-
कथासुधासिन्धुषु लीलयामः ॥ ५५ ॥

आत्मविदः ब्रह्मविदः पुराणाः वृद्धाः सनकादयः परस्तात् ज्ञातुमशक्यायाम् । 'विभाषा परावराभ्याम्' इति सप्तम्यन्तात्परशब्दात्स्वार्थे अस्तातिः । गुहायां बुद्धौ निहितं प्रतिबिम्बितं परं ब्रह्म उपासतां चिन्तयन्तु । वयं यशोदाशिशोः बालकृष्णस्य बाललीलाः बाल्ये क्रियमाणा लीलाः तासां कथाः ता एव सुधासिन्धवः तेषु लीलयामः विलासान् कुर्मः ॥ ५५ ॥

विक्रेतुकामा किल गोपकन्या
मुरारिपादार्पितचित्तवृत्तिः ।
दध्यादिकं मोहवशादवोच-
द्गोविन्द दामोदर माधवेति ॥ ५६ ॥

दध्यादिकं विक्रेतुकामा । 'तुं काममनसोरपि' इति तुमुनो मकारस्य

लोपः । गोपकन्या मुरारिपादार्पिता चित्तवृत्तिर्यया सा तयोक्ता सती मोहवशात् अनवरतकृष्णचिन्तनवशात् गोविन्द दामोदर माधवेत्येवोच्चरिकल । दधि दधि क्षीरं क्षीरमिति वक्तव्ये तदनुरागवशात्तथोक्तवतीति भावः ॥ ५६ ॥

उलूखलं वा यमिनां मनो वा
गोपाङ्गनानां कुचकुड्मलं वा ।
मुरारिनाम्नः कलभस्य नून-
मालानमासीत्त्रयमेव भूमौ ॥ ५७ ॥

मुरारिनाम्नः कलभस्य गजविशेषस्य उलूखलं वा यमिनां मुनीनां मनो वा गोपाङ्गनानां कुचकुड्मलं वा भूमौ त्रयमेव आलानं बन्धनस्तम्भ आसीत् नूनम् । रूपकोपमोत्प्रेक्षाणां संसृष्टिः ॥ ५७ ॥

करारविन्देन पदारविन्दं
मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं
बालं मुकुन्दं मनसा स्मरामि ॥ ५८ ॥

निगदव्याख्यातमेतत् ॥ ५८ ॥

शंभो स्वागतमास्यतामित इतो वामेन पद्मासन
क्रौञ्चारे कुशलं सुखं सुरपते वित्तेश नो दृश्यसे ।
इत्थं स्वप्नगतस्य कैटभजितः श्रुत्वा यशोदा गिरः
किं किं बालक जल्पसीति रचितं धूधूकृतं पातु नः ॥

स्वप्नगतस्य निद्रामनुभवतः कैटभं जयतीति कैटभजित् तस्य कृष्णस्येत्यर्थः। गिरः वाचः हे शंभो स्वागतं सुखेनागतं, इतः इतः अत्रात्र। सार्वविभक्तिकस्तसिः। अत्यादरे द्विरुक्तिः। आस्यताम् उपविश्यताम्। पद्मासन चतुर्मुख, वामेन वामपार्श्वेन मार्गेण आगच्छेति शेषः। यद्वा वामशब्दस्य दिग्वाचकत्वमङ्गीकृत्य 'दिक्शब्दमात्रादेनम्' इत्यनेन एनप्प्रत्ययः। तथा च वामेनेत्यस्य संनिहितवामभागे इत्यर्थं परिकल्प्य आस्यतामिति वानुषञ्जनीयम्। हे क्रौञ्चारे षण्मुख, कुशलं क्षेममिति। काकुः। अनेन ईशचतुर्मुखयोरेव सव्यवामपार्श्वयोरुपवेशनं न षण्मुखादीनामिति ज्ञेयम्। हे सुरपते इन्द्र, सुखमिति काकुः। हे वित्तेश कुबेर, नो दृश्यसे कदाचिदपि न दृष्टोऽसि। इत्थम् अनेन प्रकारेण यशोदा श्रुत्वा हे बाल किं किं जल्पसि इति इत्थमुक्त्वा रचितं कृतम्। यशोदयेति भावः। धूधूकृतं धूधू इत्यनुकरणशब्दः तस्य कृतं करणम्। भावे क्तः। नः अस्मान् पातु रक्षतु॥ ५९॥

कृष्णयशोदयोरुक्तिप्रत्युक्तिमालिकां कविराह—

**मातः किं यदुनाथ देहि चषकं किं तेन पातुं पय-**
**स्तन्नास्त्यद्य कदास्ति वा निशि निशा का वान्धकारोदये।**
**आमील्याक्षियुगं निशाप्युपगता देहीति मातुर्मुहु-**
**र्वक्षोजाम्बरकर्षणोद्यतकरः कृष्णः स पुष्णातु नः॥**

हे मातः इति कृष्णवचनम्। हे यदुनाथ किमिति यशोदा। चषकं पानपात्रं देहीति कृष्णः। तेन पात्रेण किं किं प्रयोजनमिति यशोदा। पयः क्षीरं पातुमिति कृष्णः। तत्पयः अद्य इदानीं नास्तीति यशोदा। 'तन्नास्त्यद्य' इति पाठः समीचीनः। 'तन्नास्तीह' इति पाठो न साधुः,

काले इहस्य विधानाभावात् । कदा वा कस्मिन्काले या अस्तीति कृष्णः । निशि रात्रौ इति यशोदा । निशा का वा निशाशब्दार्थः क इति कृष्णः अन्धकारस्य अन्धतमस्य उदये आविर्भावे इति यशोदा । अक्षियुगं नयनद्वयमामील्य संकोच्य निशाप्युपगता रात्रिः समागता पयो देहि इति इत्थमुक्त्वा मातुः यशोदाया वक्षोजौ स्तनौ तयोरम्बरम्, उत्तरीयमिति यावत् । तस्य कर्षणमाकर्षणं तत्र उद्यतः उद्युक्तः करो यस्य स तथोक्तः स प्रसिद्धः कृष्णः नः अस्मान् पुष्णातु ॥ ६० ॥

कालिन्दीपुलिनोदरेषु मुसली यावद्गतः खेलितुं
तावत्कर्बुरिकापयः पिब हरे वर्धिष्यते ते शिखा ।
इत्थं बालतया प्रतारणपराः श्रुत्वा यशोदागिरः
पायान्नः स्वशिखां स्पृशन्प्रमुदितः क्षीरेऽर्धपीते हरिः ॥

हे हरे कृष्ण, मुसली बलभद्रः, कालिन्दी यमुना तस्याः पुलिनानां सैकतानामुदरेषु मध्यप्रदेशेषु खेलितुं विहर्तुं यावद्यदा गतो गतवान् तदानीमेव कर्बुरिकायाः शबलवर्णायाः । गोविशेषस्येत्यर्थः । पयः क्षीरं पिब । अन्यथा तव क्षीरं नास्तीति भावः । पाने फलमाह— तव शिखा वर्धिष्यते वृद्धिं प्राप्स्यति । इत्थम् अनेन प्रकारेण प्रतारणं वञ्चनं तत्र पराः आसक्ताः यशोदागिरः यशोदावचनानि श्रुत्वा क्षीरे अर्धपीते सति । 'अर्धं नपुंसकम्' इति अर्धशब्दस्य पूर्वनिपातः । समासश्च । स्वस्य शिखां स्पृशन् बालतया प्रमुदितः संतुष्टः हरिः नः अस्मान् पायात् ॥ ६१ ॥

कैलासे नवनीतति क्षितितले प्राग्जग्धमृल्लोष्टति
क्षीरोदेऽपि निपीतदुग्धति लसत्स्मेरप्रफुल्ले मुखे ।

**मात्राजीर्णधिया दृढं चकितया नष्टोऽस्मि दृष्टः कया**
**धूधू वत्सक जीव जीव चिरमित्युक्तोऽवताद्वो हरिः ॥**

लसन् प्रकाशमानं तच्च तत्स्मेरं हासविशेषयुक्तं तच्च तत्प्रफुल्लं व्यात्तं च तस्मिन्मुखे, कैलासे पर्वतविशेषे नवनीतति नवनीतवदाचरति सति । उपमानान्नवनीतशब्दात् 'सर्वप्रातिपदिकेभ्यः-' इत्याचारार्थे क्विप् । क्विपः सर्वापहारिलोपः । 'सनाद्यन्ता धातवः' इति धातुत्वाल्लडादयः । लटः शत्रादेशे सप्तम्येकवचनम् । क्षितितले प्राग्जग्धं पूर्वभक्षितं तच्च तत् मृल्लोष्टं च तद्वदाचरति सति, क्षीरोदे क्षीरसमुद्रे निपीतदुग्धति पीतक्षीरवदाचरति सति । प्रपञ्चस्य कृष्णकुक्षिस्थत्वादिति भावः । अजीर्णधिया अजीर्णमस्य जातमिति बुद्ध्या दृढमत्यर्थं चकितया भीतया मात्रा यशोदया कया दृष्टः नष्टोऽस्मि हे! वत्स बालक धूधू इति दुरितपरिहारार्थं प्रयुज्यमानानुकरणशब्दः । चिरकालं जीव जीव । आदरेण द्विरुक्तिः । इति पूर्वोक्तप्रकारेण उक्तो हरिः कृष्णः वः युष्मान् अवतात् रक्षतु ॥

**किंचित्कुञ्चितलोचनस्य पिबतः पर्यायपीतं स्तनं**
**सद्यः प्रस्नुतदुग्धबिन्दुमपरं हस्तेन संमार्जतः ।**
**मात्रैकाङ्गुलिलालितस्य चुबुके स्मेराननस्याधरे**
**शौरेः क्षीरकणान्विता निपतिता दन्तद्युतिः पातु नः ॥**

पर्यायेण क्रमेण पीतं यथा तथा स्तनं पिबतः, अत एव स्तन्यपानजन्यसुखेन किंचित्कुञ्चिते ईषन्मुकुलिते लोचने यस्य तस्य, सद्यस्तदानीं प्रस्नुताः प्रकर्षेण स्नुताः दुग्धबिन्दवः यस्य तम् अपरं द्वितीयस्तनं हस्तेन संमार्जतः स्पृशतः, माता यशोदया चुबुके ओष्ठाधरप्रदेशे एकया

अङ्गुल्या लालितस्य, स्मेरं हासविशेषयुक्तम् आननं यस्य तस्य शौरेः कृष्णस्य अधरे निपतिता प्रविष्टा क्षीरकणान्विता पयःकणसंपृक्ता दन्तानां द्युतिः नः अस्मान् पातु रक्षतु ॥ ६३ ॥

उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बमुक्तामणे-
रन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारि द्युति ।
लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः
पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीविवाहोत्सवे ॥

*विवाहोत्सवे लज्जाव्याजमुपेत्य लज्जमुपाधीकृत्य नम्रं वदनं यस्याः सा तथोक्ता सती, उत्तुङ्गस्तनयोः उन्नतकुचयोः मण्डलं प्रदेशः तस्योपरि लसत् प्रकाशमानं तच्च तत्प्रालम्बं च । कण्ठात्प्रलम्बमानो हारविशेषः प्रालम्बशब्दार्थः । कण्ठमालिकेति यावत् । तस्य मुक्तामणेः अन्तर्मध्ये बिम्बितम्, इन्द्रनीलानां निकरः समूहः तस्य च्छाया कान्तिः । 'कान्त्यनातपयोश्छाया' इति शब्दार्णवे । तामनुकर्तुं शीलमस्यास्तीति च्छायानुकारिणी । समानेत्यर्थः । ताच्छील्ये णिनिः । सुपीत्यनुवृत्तौ पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमित्यस्य केवलोपसर्गनिवृत्तौ तात्पर्यं न तु सोपपदस्येति जयमङ्गलाकारः । 'कर्म सुतानुबन्धि' इति भट्टिकाव्यप्रयोगं समर्थितवान् । द्युतिः कान्तिर्यस्य तत् मुरारेः कृष्णस्य वपुः शरीरं स्पष्टं स्वच्छं यथा तथा पश्यन्ती मुदिता संतुष्टा लक्ष्मीः रुक्मिणी भवतां मुदे संतोषाय अस्तु ॥ ६४ ॥*

बलरामकृष्णयशोदानामुक्तिप्रत्युक्तिप्रकारं कविराह—

कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया
तथ्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् ।

**व्यादेहीति विदारिते च वदने दृष्ट्वा समस्तं जग-**
**न्माता यस्य जगाम विस्मयपदं पायात्स नः केशवः ॥**

हे अम्ब मातः, 'अम्बार्थनद्योः' इति ह्रस्वः । रन्तुं क्रीडितुं गतेन कृष्णेन अधुना इदानीं स्वेच्छया यथेच्छं मृन्मृत्तिका भक्षिता इति बलरामः । हे कृष्ण तथ्यं सत्यं तदिति काकुः इति यशोदा । क एवमाहेति कृष्णः । मुसलीति यशोदा । मिथ्याम्ब पश्याननमिति कृष्णः । व्यादेहीति यशोदा । विदारिते च वदने । कृष्णवदने इत्यर्थः । समस्तं *जगत् दृष्ट्वा यस्य कृष्णस्य माता यशोदा विस्मयपदमाश्चर्यस्थानं जगाम,* स प्रसिद्धः केशवः नः पायात् ॥ ६५ ॥

**स्वाती सपत्नी किल तारकाणां**
**मुक्ताफलानां जननीति रोषात् ।**
**सा रोहिणी नीलमसूत रत्नं**
**कृतास्पदं गोपवधूकुचेषु ॥ ६६ ॥**

*तारकाणामश्विन्यादिनक्षत्राणां समानः पतिर्यस्याः सा सपत्नी ।* 'नित्यं सपत्न्यादिषु' इति नित्यं नकारादेशः । स्वाती स्वातीति नक्षत्रं मुक्ताफलानां जननीति रोषात् किल । स्वातीसमये मुक्ताफलानामुत्पत्तिरिति प्रसिद्धिः । सा प्रसिद्धा रोहिणी नक्षत्रं गोपवधूकुचेषु कृतमास्पदं येन तं नीलं रत्नमसूत उत्पादयामास । रोहिणीनक्षत्रजातत्वात्कृष्णस्येति *भावः । मुक्तारत्नयोर्मध्ये रत्नस्य श्रेष्ठत्वात्कृष्णरत्नजननेन स्वात्यपेक्षया* उत्कृष्टा जातेति तात्पर्यम् ॥ ६६ ॥

नृत्यन्तमत्यन्तविलोकनीयं
कृष्णं मणिस्तम्भगतं मृगाक्षी ।
निरीक्ष्य साक्षादिव कृष्णमग्रे
द्विधा वितेने नवनीतमेकम् । ६७ ॥

नृत्यन्त नर्तनं कुर्वन्तम्, अत्यन्तविलोकनीयम् अत्यादरेण द्रष्टुं योग्यम्, मणिस्तम्भगतं मणिस्तम्भे प्रतिबिम्बितं कृष्णं दृष्ट्वा मृगाक्षी यशोदा अग्रे पुरः साक्षात्कृष्णमिव बिम्बभूतकृष्णमिव निरीक्ष्य एकं नवनीतं द्विधा वितेने अकरोत् । एकं नवनीतखण्डं खण्डद्वयं कृतवतीत्यर्थः ॥ ६७ ॥

वत्स जागृहि विभातमागतं
जीव कृष्ण शरदां शतं शतम् ।
इत्युदीर्य सुचिरं यशोदया
दृश्यमानवदनं भजामहे ॥ ६८ ॥

हे वत्स हे पुत्रक, 'वत्सस्तर्णके वर्षे पुत्रादौ' इति शब्दार्णवे । विभातं प्रभातम् । रात्रेरवसानमित्यर्थः । आगतं जातमित्यर्थः । जागृहि निद्रां त्यज । हे कृष्ण, शरदां शतं शतम् । आदरेण द्विरुक्तिः । जीव प्राणान्धारय इति अनेन प्रकारेण उदीर्य उक्त्वा यशोदा सुचिरं बहुकालम् । अत्यन्तसंयोगे द्वितीया । दृश्यमानं प्रेक्ष्यमाणं वदनं यस्य तं कृष्णं भजामहे । 'भजे महः' इति पाठान्तरम् । महः कृष्णमित्यर्थः ॥

ओष्ठं जिघ्रञ्शिशुरिति धिया चुम्बितो वल्लवीभिः
कण्ठं गृह्णन्प्रणितपदं गाढमालिङ्गिताङ्गः ।

**दोष्णा लज्जापदमभिमृशन्नङ्कमारोपितात्मा**
**धूर्तस्वामी हरतु दुरितं दूरतो बालकृष्णः ॥ ६९ ॥**

वल्लवीभिः शिशुरिति धिया अयं बाल इति बुद्ध्या चुम्बितः सन् अरुणितं रक्तीकृतं पदं प्रदेशो यस्मिन्कर्मणि तद्यथा तथा ओष्ठमधरं जिघ्रन्, सीत्कारपुरःसरं गृह्णन्, वल्लवीभिः शिशुरिति धिया गाढं यथा भवति तथा आलिङ्गितान्यङ्गानि यस्य तादृशः सन् कण्ठं गृह्णन्नालिङ्गन्, वल्लवीभिः शिशुरिति धिया अङ्कमुत्सङ्गम् । 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः । आरोपितः आत्मा देहो यस्य सः । अङ्के उपवेश्यमानः सन् इत्यर्थः । दोष्णा हस्तेन लज्जापदं मदनसदनं स्पृशन्, धूर्तानां दुर्जनानां स्वामी श्रेष्ठः । अतिधूर्त इत्यर्थः । बालकृष्णः दूरतः दूर एव दुरितमुपद्रवम् । ममेति शेषः । हरतु ॥ ६९ ॥

**एते लक्ष्मण जानकीविरहितं मां खेदयन्त्यम्बुदा**
**मर्माणीव च घट्टयन्त्यलममी क्रूराः कदम्बानिलाः ।**
**इत्थं व्याहृतपूर्वजन्मचरितो यो राधया वीक्षितः**
**सेर्ष्यं शङ्कितया स नः सुखयतु स्वप्नायमानो हरिः ॥**

हे लक्ष्मण, जानक्या विरहितम् । जानकीं विना वर्तमानमित्यर्थः । माम् एते परिदृश्यमाना अम्बुदा मेघा. खेदयन्ति खेदवन्तं कुर्वन्ति । 'णाविष्ठवत्प्रातिपदिकस्य' इति इष्ठवत्त्वान्मतुब्लोपः । अमी कदम्बानिलाः नीपपुष्पगन्धवायवः क्रूराः सन्तः मर्माणि मर्मप्रदेशान् अत्यर्थं घट्टयन्ति ताडयन्तीव । इत्थं अनेन पूर्वोक्तप्रकारेण व्याहृतानि पूर्वजन्मचरितानि येन तादृशः, ईर्ष्यया सहितं यथा तथा शङ्कितया एतस्

स्यन्तरे अधिकप्रीतिरिति संजातशङ्कया राधया स्वप्रायमानः निद्रामनु-भवन्निव स्थितः यो हरिः कृष्णः दृष्टः स नः अस्माकं सुखयतु सुखं करोतु । यद्वा अस्मान् सुखिनः करोतु इति वा । सुखिन्शब्दस्य णेरिष्ठ-वद्भावाट्टिलोपः ॥ ७० ॥

ओष्ठं मुञ्च हरे बिभेमि भवता पानैर्हता पूतना
कण्ठाश्लेषममुं जहीहि दलितावालिङ्गनेनार्जुनौ ।
मा देहि च्छुरितं हिरण्यकशिपुर्नीतो नखैः पञ्चता-
मित्थं वारितरात्रिकेलिरवताल्लक्ष्म्यापहासाद्धरिः ॥

हे हरे कृष्ण, ओष्ठम् अधरं मुञ्च त्यज, बिभेमि, भवता पानैः पूतना पूतना नाम राक्षसी हता । अमुं परिदृश्यमानं कण्ठाश्लेषं जहीहि त्यज, 'ई हल्यघोः' इतीत्वम् । बिभेमीति सर्वत्र संबध्यते । आलिङ्गनेन अर्जुनौ ककुभौ वृक्षविशेषौ दलितौ भिन्नौ । छुरितं नखव्रणं मा देहि, हिरण्यकशिपुः नखैः पञ्चतां नीतः मरणं प्रापितः । इत्थम् अनेन प्रकारेण लक्ष्म्या रुक्मिण्या अपहासाद्धेतोः परिहासवशात् वारिता रात्रिकेलिर्यस्य सः हरिः कृष्णः अवतात् रक्षतु, अस्मानिति शेषः ॥ ७१ ॥

रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितु-
र्वाचा पञ्चवटीवने विहरतस्तामाहरद्रावणः ।
निद्रार्थं जननीकथामिति हरेर्हुंकारतः शृण्वतः
सौमित्रे क धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु नः ॥

अस्मिन्पद्ये हे कृष्णेत्यध्याहर्तव्यम् । हे कृष्ण, रामो नाम राम इति

प्रसिद्धः बभूव; पूर्वं राम इति कश्चिद्राजा आसीदित्यर्थः । इति यशोदा कथामाह । तां कथामङ्गीकरोति हुमिति कृष्णः । तस्य अबला भार्या सीतेति; बभूवेत्यनुषङ्गः । इति यशोदा । हुमिति पुनरप्यङ्गीकरोति कृष्णः । पितुः दशरथस्य वाचा वचनेन, पञ्चानां वटानां समाहारः पञ्चवटी । 'द्विगोः' इति ङीप् । तस्या वने विहरतः विहारं कुर्वतः तस्य रामस्य तां सीतां रावणः आहरत् हृतवान्, इत्यनेन प्रकारेण निद्रार्थं निद्रार्थं जननीकथां यशोदाकथा यशोदयोच्यमानां कथां हुंकारतः हुंकारपुरःसरं शृण्वतः हरेः कृष्णस्य हे सौमित्रे क धनुः धनुः केति कशब्दावृत्तिः । संभ्रमेण वह्वृक्तिः । इत्यनेन धनुः केति प्रकारेण व्यग्रा उच्चारिता गिरः वाचः अस्मान्पान्तु ॥ ७२ ॥

बालोऽपि शैलोद्धरणाग्रपाणि-
नीलोऽपि नीरन्ध्रतमःप्रदीपः ।
धीरोऽपि राधानयनावबद्धो
जारोऽपि संसारहरः कुतस्त्वम् ॥ ७३ ॥

बालोऽपि बालः सन्नपि शैलस्य पर्वतस्य; गोवर्धनगिरेरित्यर्थः । उद्धरणमुन्नमनम् अग्रे पाणौ पाण्यग्रे यस्य सः, नीलोऽपि नीलवर्णः सन्नपि नीरन्ध्रं गाढं तच्च तत्तमश्च । अन्धतमसमिति यावत् । तस्य प्रदीपः । प्रदीपो यथा तमो निवर्तयति तद्वन्निवर्तक इत्यर्थः । धीरोऽपि धीरः सन्नपि राधानयनाभ्यामवबद्धः; राधाकटाक्षपातमात्रेण तद्वशगो भवसीत्यर्थः । जारोऽपि उपपतिः सन्नपि संसारहरः त्वं कुतः केत्यर्थः । एवं विरोधः । परिहारस्तु— विष्ण्ववतारत्वात्पर्वतोद्धारणत्वमविरुद्धम् । अज्ञानतमोनिवर्तकत्वेन गाढतमोनिवर्तकत्वमविरुद्धम् । स्वस्य कामनाया

अभावादाधानयनावबद्धत्वमविरुद्धम् । एवमेव गोपिकाकामनावशादेव स्वस्य गोपिकादिसंबन्धः न तु स्वकामनावशादिति कृष्णेनैवोक्तमिति कृष्णाष्टोत्तरशतदिव्यनामभाष्यकृद्वचोऽपि । यद्वा, शैलोद्धरणाप्तपाणिः बालोऽपि अपिशब्दो गर्हार्थकः । बालो न भवसीत्यर्थः । नीरन्ध्रतमः प्रदीपः नीलोऽपि नीलो न भवसीत्यर्थः । धीरः अनादिब्रह्मचारी राधानयनावबद्धोऽपि । राधानयनावबद्धो न भवसीत्यर्थः । संसारहरः अजामिलादीनां सकृत्स्मरणमात्रेण संसारनिवर्तकः जारोऽपि उपपतिर्न भवसीत्यर्थः । त्व कुतः । सप्तम्यर्थे तसिः । क्वेत्यर्थः । त्वद्धर्मा इत्थमपि वक्तुमशक्या इति भावः । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः ॥ ७३ ॥

बालाय नीलवपुषे नवकिङ्किणीक
जालाभिरामजघनाय दिगम्बराय ।
शार्दूलदिव्यनखभूषणभूषिताय
नन्दात्मजाय नवनीतमुषे नमस्ते ॥ ७४ ॥

नीलं वपुर्यस्य तस्मै, नवाश्च ते किङ्किणीकाः क्षुद्रघण्टिकाश्च तेषां जालं समूहः तेनाभिरामं सुन्दरं जघनं कटिपुरोभागो यस्य तस्मै, दिगम्बराय, शार्दूलस्य व्याघ्रस्य दिव्यनख कनिष्ठिकास्थनखमित्यर्थः । तदेव भूषणं तेन भूषिताय अलंकृताय, नवनीतं मुष्णाति चौर्येण गृह्णातीति तथोक्तः तस्मै, नन्दात्मजाय नन्दकुमाराय, बालाय बालकृष्णाय ते तुभ्यं नमः । 'नमःस्वस्ति—' इत्यादिना चतुर्थी ॥ ७४ ॥

सव्ये पायसभक्तमाहितरसं बिभ्रन्मुदा दक्षिणे
पाणौ शारदचन्द्रमण्डलनिभं हैयंगवीनं वहन् ।

कण्ठे कल्पितपुण्डरीकनखमप्युद्दामदीप्तं दध-
देवो दिव्यदिगम्बरो दिशतु नः सौख्यं यशोदाशिशुः ॥

सव्ये वामे पाणौ आहितः न्यस्तः रसः यस्मिन् तत् पायसं परमान्नं तदेव भक्ष्यमन्नं मुदा संतोषेण बिभ्रत् वहन् । 'नाभ्यस्ताच्छतुः' इति नुमभावः । दक्षिणे पाणौ शरत्कालसंबन्धि शारदं तच्च तच्चन्द्रमण्डलं च तस्य निभं सदृशं हैयंगवीनं घनीभूतसद्योघृतम् । 'तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम्' इत्यमरः । 'हैयंगवीनं संज्ञायाम्' इति निपातः । वहन् । कण्ठे उद्दामं दीप्तं प्रचुरकान्तियुक्तं कल्पितं स्वर्णादिना रचितं पुण्डरीकनखम्, 'व्याघ्रोऽपि पुण्डरीको ना' इत्यमरः । पुण्डरीकनखमपीत्यत्र अपिशब्दोऽनुक्तसमुच्चयार्थः । तेन स्वोचितप्रदेशे किङ्किणीजालादिकमपीत्यर्थो लभ्यते । दधत् । पूर्ववन्नुमभावः । दिव्यदिगम्बरः यशोदाशिशुः देवः अस्माकं सौख्यं दिशतु ददातु ॥ ७५ ॥

किङ्किणिकिणिकिणिरभसै-
रङ्गणभुवि रिङ्गणैः सदाटन्तम् ।
कुङ्कुणुकुणुपदयुगलं
कङ्कणकरभूषणं हरिं वन्दे ॥ ७६ ॥

किङ्किण्यः क्षुद्रघण्टिकाः तासां किणिकिणिः किणिकिणीत्यनुकरणशब्दः तस्य रभसो वेगः येषां तैः रिङ्गणैः स्खलनैः अङ्गणभुवि चलत्प्रदेशे सदा अटन्तं संचरन्तम् । कटिप्रदेशविद्यमानकाञ्चीघटितकिंकिणीध्वनियुक्तरिङ्गणैः सह नन्दव्रजगृहाङ्गणेषु सदा चरन्तमित्यर्थः । कुङ्कुणुकुणु इत्यनुकरणशब्दः । तेन युतं पदयुगलं यस्य तम् । मञ्जीरध्वनियुतपादद्वययुक्तमि-

त्वर्थः । कङ्कणेत्यनुकरणशब्दः । तेन युक्तं करभूषणं कङ्कणं यस्य तं हरिं कृष्णं वन्दे ॥ ७६ ॥

संबाधे सुरभीणा-
मम्बामायासयन्तमनुयान्तीम् ।
लम्बालकमवलम्बे
तं बालं तनुविलग्नजम्बालम् ॥ ७७ ॥

सुरभीणां गवां सबाधे संकटे अनुयान्तीं पश्चादागच्छन्तीम् अम्बां मातरम् आयासयन्तं परिश्रमवतीं कुर्वन्तम् । आयासवतीशब्दात्तत्करोतिण्यन्ताल्लटः शतरि णेरिष्ठवद्भावान्मतुब्लोपे रूपम् । लम्बा लम्बमाना अलकाश्चूर्णकुन्तला यस्य तम्, तनौ शरीरे विशेषेण लग्नो जम्बालः पङ्को यस्य तम्, तं प्रसिद्धं बालं बालकृष्णम् अवलम्बे आश्रये ॥ ७७ ॥

अञ्चितपिञ्छाचूडं
संचितसौजन्यवल्लवीवलयम् ।
अधरमणिनिहितवेणुं
बालं गोपालमनिशमवलम्बे ॥ ७८ ॥

अञ्चिता बहुमन्यमाना पिञ्छायुता चूडा शिखा यस्य तम्, संचितं संगृहीतं सौजन्यं सुजनभावः सौन्दर्यादिकं यस्य स तथोक्तः वल्लवीनां वलयः समूहो यस्य तम्, अधरो मणिरिव तत्र निहितो न्यस्तो वेणुर्येन तं बालं गोपालकृष्णम् अनिशं संततम् अवलम्बे आश्रये । अत्र पिञ्छे-

त्वाकारान्तप्रयोगो निघण्टुन्तरेषु मृग्यः । चम्पूरामायणे भोजप्रयोगात्साधुता ज्ञेया ॥ ७८ ॥

प्रह्लादभागधेयं
निगमान्तमहागुहान्तराधेयम् ।
नरहरिपदाभिधेयं
विबुधविधेयं ममानुसंधेयम् ॥ ७९ ॥

प्रह्लादस्य प्रह्लादनामकविष्णुभक्तस्य भागधेयं भाग्यभूतम् । कार्ये कारणत्वमुपचारात् । निगमान्ता वेदान्ता त एव महती चासौ गुहा च । 'पुंवत्कर्मधारय-' इत्यादिना पुंवद्भावात्स्त्रीप्रत्ययलोपः । 'आन्महतः-' इति महत आकारोऽन्तादेशः । तस्या अन्तर्मध्ये आधेयं प्रतिपाद्यम्, नरहरिरिति पदं नरहरिपदं तेनाभिधातुं वक्तुं योग्यमभिधेयम्, विबुधा देवा विधेया भृत्या यस्य तम्, यद्वा विबुधानां विदुषां विधेयम्, भक्तवत्सलत्वादिति भावः । मम मया । 'कृत्यानां कर्तरि वा' इति षष्ठी । अनुसंधेयम् अनुसंधातुं निदिध्यासितुं योग्यम् । एतादृशं वस्तु विचारयामीत्यर्थः । अयं श्लोकः प्रक्षिप्त इव भाति ॥ ७९ ॥

संस्तुतवतः पदार्थं प्रश्नपूर्वकं निश्चिनोति कविः—

संसारे किं सारं
कंसारेश्चरणयुगलपरिवसनम् ।
ज्योतिः किमन्धकारे
यदन्धकारेरनुस्मरणम् ॥ ८० ॥

संसारे सारं श्रेष्ठमित्यर्थः । 'बले स्थिरांशे सारो ना धने न स्त्री परे-

ऽर्थवत्' इति शब्दार्णवे । किमिति प्रश्नः । उत्तरमाह— कंसारेः कृष्णस्य चरणयुगलं पदद्वयं तस्य परिवसनं शुश्रूषा ध्यानं वा । परिवसनमेव श्रेष्ठं नान्यदित्यर्थः । अन्धकारे पापे अज्ञाने सति वा ज्योतिः निवर्तकं किमिति प्रश्नः । उत्तरमाह—यदन्धकारेरिति । अन्धको नाम राक्षसः तस्य अरिः शत्रुः महादेव इति यावत् । तस्यानुसरणं स्मरणसंपत्तिः यत्तज्ज्योतिरित्यर्थः । 'स्मरणादरुणाचल' इति, 'यद्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् । पवित्रकीर्तिं तमलङ्घ्यशासनं भवादिनो द्वेष्टि शिवं शिवेतरः' इत्यादिवचनादिति भावः ॥

> कलशनवनीतचोरे
> कमलादृक्कुमुदचन्द्रिकापूरे ।
> विहरतु नन्दकुमारे
> चेतो मम गोपसुन्दरीजारे ॥ ८१ ॥

कलशेषु नवनीतस्य चोरे, कमला रुक्मिणी तस्या दृशावेव कुमुदे कैरवे तयोः चन्द्रिकापूरे ज्योत्स्नाप्रवाहे, गोपसुन्दरीणां जारे उपपतौ, नन्दकुमारे कृष्णे मम चेतः विहरतु विहारं करोतु । सदा कृष्णस्मरणमेव करोत्वित्यर्थः ॥ ८१ ॥

नवनीतं मुष्णतः कृष्णस्य गोपिकायाश्चोक्तिप्रत्युक्तिमालिकां कविराह—

> कस्त्वं बाल बलानुजः किमिह रे मन्मन्दिराशङ्कया
> युक्तं तन्नवनीतपात्रविवरे हस्तं किमर्थं न्यसेः ।
> मातः कंचन वत्सकं मृगयितुं मा गा विषादं क्षणा-
> दित्येवं वरवल्लवीप्रतिवचः कृष्णस्य पुष्णातु नः ॥

हे बाल त्वं क इति गोपी । बलस्य बलरामस्यानुज इति कृष्णः । ते तव इह मद्गृहे किं किं प्रयोजनमिति गोपी । मम मन्दिरं तस्याशङ्कया संदेहेनेति कृष्णः । मयागतमिति शेषः । अस्तु गृहं यस्य कस्यचित् नवनीतपात्रविवरे नवनीतकलशबिले हस्तं किमर्थं कस्मै प्रयोजनाय न्यसेः न्यस्तवान् एतदिदं प्रयोजनं ब्रूहि वद इति गोपी । हे मातः, कंचन वत्सकं तर्णकम् । अल्पार्थे कप्रत्ययः । 'वत्सोऽथ तर्णके वर्षे पुत्रादौ' इति शब्दार्णवे । मृगयितुम् अन्वेष्टुम् । क्षणात् क्षणमात्रं विषादं खेदं मा गाः न प्राप्नुहि । 'न माङ्योगे' इति अडभावः । इत्येवमेतादृशं कृष्णस्य वरवल्लव्याः प्रतिवचनः प्रतिवचनम् । कृष्णेन वरवल्लवीं प्रति उच्यमानं वाक्यमित्यर्थः । अस्मान् पुष्णातु ॥

गोपालाजिरकर्दमे विहरसे विप्राध्वरे लज्जसे
ब्रूषे गोधनहुंकृतैः स्तुतिशतैर्मौनं विधत्से विदाम् ।
दास्यं गोकुलपुंश्चलीषु कुरुषे स्वाम्यं न दान्तात्मसु
ज्ञातं कृष्ण तवाङ्घ्रिपङ्कजयुगं प्रेमाचलं मञ्जुलम् ॥

हे कृष्ण, गोपालानामजिराणि गृहाङ्गणानि तेषु कर्दमः पङ्कः तस्मिन्विहरसे विहारं कुरुषे । विप्राध्वरे ब्राह्मणयज्ञे लज्जसे त्रपामनुभवसि । वृन्दावनपशुपालनवेलायां यागशालां प्रति स्वयमगत्वा गोपप्रेषणादिति भावः । गोधनानां पशूनां हुंकृतैः हुंकारैः हुमिति ध्वनिभिर्हेतुभिः ब्रूषे वदसि । अव्यक्तपशुवाक्येनाप्युत्तरं ददासीत्यर्थः । विदां विदुषाम् । 'विद ज्ञाने' इत्यस्मात्कर्तरि क्विप् । स्तुतिशतैः मौनं मूकतां विधत्से विदधासि । तूष्णीं तिष्ठसीत्यर्थः । गोकुले व्रजे पुंश्चल्यः असत्यः । स्वैरिण्य इति यावत् । तासु दास्यं दासभावं कुरुषे गोपीनां पुष्पाद्याहरणवशादिति

भावः । दान्तः विषयेषु निवृत्तः आत्मा अन्तःकरणं येषां तेषु विषये स्वाम्यं स्वामित्वं न कुरुषे । अयं मदीय इति न गृह्णासीत्यर्थः । अतः मञ्जुलं सुन्दरं तवाङ्घ्रिपङ्कजयुगं प्रेम्णा अचलं स्थिरम् । ज्ञातं मयेति शेषः । येषां न भक्तिस्तत्र न गच्छसीति न विरोध इति भावः ॥ ८३ ॥

नमस्तस्मै यशोदाया दायादायास्तु तेजसे ।
यद्धि राधामुखाम्भोजं भोजं भोजं व्यवर्धत ॥८४॥

यत्तेजः राधाया मुखमेवाम्बुजं पद्मं भोजं भोजं भुक्त्वा भुक्त्वा । आघ्रायाघ्रायेत्यर्थः । 'आभीक्ष्ण्ये णमुल्च' इति णमुल् । 'नित्यवी-प्सयोः' इति द्विर्भावः । व्यवर्धत वृद्धिं प्राप्नोत्, तस्मै यशोदायाः दायादाय पुत्राय । 'दायादौ सुतबान्धवौ' इत्यमरः । तेजसे नमोऽस्तु 'नमः स्वस्ति--' इत्यादिना चतुर्थी ॥ ८४ ॥

अवताराः सन्त्वन्ये
सरसिजनयनस्य सर्वतोभद्राः ।
कृष्णादन्यः को वा
प्रभवति गोगोपगोपिकामुक्त्यै ॥ ८५ ॥

सरसिजे पुण्डरीके इव नयने यस्य तस्य । विष्णोरित्यर्थः । सर्वतः सर्वत्र भद्रं मङ्गलं येषां ते अन्ये केचन अवताराः आविर्भावाः सन्तु-तिष्ठन्तु । कृष्णात् कृष्णावतारात् अन्यो भिन्नः को वा अवतारः गावश्च गोपाश्च गोपिकाश्च तासां मुक्त्यै प्रभवति समर्थो भवेत् । कृष्णावतार एव पश्वादीनामपि मुक्तिसंपादको नान्योऽवतार इति कृत्वा स एव सेव्य इति भावः ॥ ८५ ॥

मध्येगोकुलमण्डलं प्रतिदिशं चाम्भारवेजृम्भिते
प्रातर्दोहमहोत्सवे नवघनश्यामं रणन्नूपुरम् ।
फालेबालविभूषणं कटिरणत्सत्किङ्किणीमेखलं
कण्ठेव्याघ्रनखं च शैशवकलाकल्याणकार्त्स्न्यं भजे ॥

प्रातर्दोहः प्रातःकालदोहनं तस्य महोत्सवः,तस्मिन् । प्रातर्दोहनवेलायामित्यर्थः । दिशि दिशि प्रतिदिशं च । वीप्सार्थेऽव्ययीभावसमासः । समस्तदिक्षु इत्यर्थः । अम्भा इति रवा ध्वनयः तैर्विजृम्भिते अत्यर्थं प्रकाशमाने गोकुलमण्डलं पशुविशेषाणा समूहः । नन्दव्रज इत्यर्थः । तस्य मध्ये मध्येगोकुलमण्डलम् । 'पारे मध्ये षष्ठया वा' इत्यव्ययीभावसमासः । नन्दव्रजमध्ये इत्यर्थः । नवघनश्यामं नूतनघनवन्नीलम्, रणन्तौ शिञ्जितवन्तौ नूपुरौ मञ्जीरौ यस्य तत्, फाले ललाटे बालविभूषणं अश्वत्थदलसदृशबालविभूषणं यस्य तत्, कण्ठेव्याघ्रनखं चेत्यत्र. चशब्दोऽनुक्तसमुच्चयार्थः । कर्णयोः रत्नकुण्डलमपीत्यर्थः । 'अमूर्धमस्तकात्स्वाङ्गादकामे' इति सप्तम्या अलुक् । कटिर्जघनप्रदेशः तत्र रणन्त्यः ध्वनियुक्ताः सत्किङ्किण्यः समीचीनाः क्षुद्रघण्टिकाः यस्याः सा तथोक्ता मेखला काञ्ची यस्य तत्, शिशुसंबन्धिन्यः शैशव्यः ताश्च ताः कलाश्च तासां कल्याणानि शुभानि तेषां कार्त्स्न्यं सामस्त्यम् । श्रीकृष्णमित्यर्थः । भजे सेवे ॥ ८६ ॥

सजलजलदनीलं दर्शितोदारलीलं
करतलधृतशैलं वेणुवाद्ये रसालम् ।
व्रजजनकुलपालं कामिनीकेलिलोलं
कलितललितमालं नौमि गोपालबालम् ॥

जलेन सहितः सजलः स चासौ जलदो मेघः तद्वन्नीलम्, दर्शिता उदारा लीला पूतनावधायद्भुतलीला येन तम्, करतलेन धृतो गोवर्धनो येन तम्, वेणुना वाद्यैः वेणुगानविशेषैः रसालं रसवन्तम्। वेणुनादजननाह्लादयुक्तमित्यर्थः। व्रजजनकुलानि नन्दव्रजे विद्यमानजनसमूहाः तेषां पालं रक्षकम्, कामिनीकेलिषु लोलं सतृष्णम्, कलिता धृता ललिता कोमला माला वनमालिका येन तम्। 'स्त्रियाः पुंवत्–' इत्यादिना पुंवत्त्वात्स्त्रीप्रत्ययलोपः। 'गोस्त्रियोरुपसर्जनस्य' इत्युत्तरपदस्य ह्रस्वः। गोपालबालं कृष्णं नौमि। 'णु स्तुतौ' इत्युत्तमैकवचनम्॥

स्मितललितकपोलं स्निग्धसंगीतलोलं
ललितचिकुरजालं चौर्यचातुर्यलीलम्।
शतमखरिपुकालं शातकुम्भाभचेलं
कुवलयदलनीलं नौमि गोपालबालम्॥८८॥

स्मितेन हेतुना ललितौ ईप्सितौ कपोलौ गण्डप्रदेशौ यस्य तम्, स्निग्धाः स्वच्छहृदया नारदादयः तेषां संगीतेषु लोलं सतृष्णम्, ललितं स्निग्धं चिकुराणां केशानां जालं समूहो यस्य तम्, चौर्ये नवनीतादिचौर्ये चातुर्यं सामर्थ्यमेव लीला यस्य तम्, शतमखरिपवः कंसादयः तेषां कालं यमम्, शातकुम्भस्य स्वर्णस्य आभा कान्तिरिव आभा यस्य तत्तथोक्तं चेलं वस्त्रं यस्य तम्। पीताम्बरमित्यर्थः। कुवलयदलनीलं कुवलयदलवन्नीलं गोपालबालकृष्णं नौमि॥ ८८॥

मुरलिनिनदलोलं मुग्धमायूरचालं
दलितदनुजजालं धन्यसौजन्यलीलम्।

परहितनवहेलं पद्मसद्मानुकूलं
नवजलधरनीलं नौमि गोपालबालम् ॥ ८९॥

मुरलेर्निनदः तत्र लोलं सतृष्णम्, मुग्धं सुन्दरं मायूरवालं मयूरस्य पिञ्छं यस्य तम्, दलितानि भिन्नानि दनुजजालानि राक्षससमूहा येन तम्, धन्याः कृतात्मानः तेषु सौजन्ययुक्ता लीला यस्य तम्, परेषामन्येषां हिता हितकराः नवा हेला नूतनलीलाः यस्य तम्। यद्वा परेषां शत्रूणां हिता हितकरा लीला वधशिक्षणादिक्रियाविशेषा यस्य तम्। कृष्णेन क्रियमाणवधादीनामपि मुक्तिसंपादकत्वादिति भावः। पद्मं सद्म गृहं यस्य तस्य चतुर्मुखस्य अनुकूलम्। यद्वा पद्मसद्मनो लक्ष्म्या अनुकूलमिति वा । नवजलधरनीलं नवजलधरवन्नीलं गोपालबालं नौमि ॥ ८९ ॥

सरसगुणनिकायं सच्चिदानन्दकायं
शमितसकलमायं सत्यलक्ष्मीसहायम् ।
शमदमसमुदायं शान्तसर्वान्तरायं
सुहृदयजनदायं नौमि गोपालरायम् ॥ ९० ॥

सरसा रसयुक्ता गुणानां सौन्दर्यादीनां निकायाः समूहा यस्य तम्, सत् परमार्थः स चासौ चित् ज्ञानं सा चासावानन्दश्च सुखं यस्य सं तथोक्तः कायो देहो यस्य तम्। सत्यज्ञानानन्दस्वरूपमित्यर्थः। शमिता नाशिताः सकलाः समस्ता मायाः पूतनादिरचिता येन तम्, सत्यायाः सत्यभामारूपाया लक्ष्म्याः सहायम्, शमो बहिरिन्द्रियनिवृत्तिः दमो अन्तरिन्द्रियनिवृत्तिः तयो समुदायम्। शमदमस्वरूपमित्यर्थः। शान्ता नष्टाः सर्वान्तरायाः समस्तविघ्ना यस्य तम्। 'निष्ठा' इति

शान्तशब्दस्य पूर्वनिपातः। सु शोभनानि हृदयानि येषां ते तथोक्ताः। निर्मलान्तरङ्गा इत्यर्थः। त एव जनाः तेषां दायो भागः तम्। सज्जनपोषकमित्यर्थः। गोपालानां रायं धनं नौमि स्तौमि। 'णु स्तुतौ' ॥९०॥

लक्ष्मीकलत्रं ललिताब्जनेत्रं
पूर्णेन्दुवक्त्रं पुरुहूतमित्रम्।
कारुण्यपात्रं कमनीयगात्रं
वन्दे पवित्रं वसुदेवपुत्रम् ॥ ९१ ॥

लक्ष्मीः रुक्मिणी कलत्रं भार्या यस्य तम्, ललिते अब्जवन्नेत्रे यस्य तम्, पूर्णेन्दुवद्वक्त्रं मुखं यस्य तम्, पुरुहूतस्य इन्द्रस्य मित्रम्, कारुण्यस्य दयायाः पात्रमाधारभूतम्। दयासमुद्रमित्यर्थः। कमनीयं काम्यमानं गात्रं यस्य तम्, पवित्रं शुचिस्वरूपं वसुदेवपुत्रं वन्दे ॥ ९१ ॥

मदमयमदमयदुरगं
यमुनामवतीर्य वीर्यशाली यः।
मम रतिममरतिरस्कृति-
शमनपरः स क्रियात्कृष्णः ॥ ९२ ॥

यः कृष्णः वीर्येण शलितुं शीलमस्यास्तीति वीर्यशाली सन् यमुनामवतीर्य अवगाह्य मदमयं मदप्रचुरम् उरगं सर्पम्। कालीयमित्यर्थः। अदमयत्, अमराणां गोगोपालानाम्। कृष्णपक्षीयाणां सर्वेषां देवस्वरूपत्वादिति भावः। तिरस्कृतिस्तिरस्कारः। ह्रदस्थकालीयविषयुक्त-

जलपानवशाज्जायमानमूर्च्छेति यावत् । तस्याः शमनं शान्तिः तत्र पर आसक्तः, स कृष्णः मम रतिं सुख क्रियात् करोतु ॥ ९२ ॥

**मौलौ मायूरबर्हं मृगमदतिलकं चारुलालाटपट्टे**
**कर्णद्वन्द्वे च तालीदलमतिमृदुलं मौक्तिकं नासिकायाम् ।**
**हारो मन्दारमालापरिमलभरिते कौस्तुभस्योपकण्ठे**
**पाणौ वेणुश्च यस्य व्रजयुवतियुतः पातु पीताम्बरो नः ॥**

यस्य कृष्णस्य मौलौ चूडायाम् । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः । मयूरस्येदं मायूरं तच्च तद्बर्हं पिच्छं च, चारुलालाटपट्टे सुन्दरललाटप्रदेशे मृगमदतिलकं कस्तूरीचित्रकम्, कर्णद्वन्द्वे अतिमृदुलमत्यन्तकोमल तालीदलं तालपत्रं च, नासिकायां मौक्तिकम्, मन्दारमालानां कल्पवृक्षपुष्पमालिकाना परिमल. तस्य भरः अतिशयः अस्य संजातः भरितः तस्मिन् कौस्तुभस्य वक्षःस्थले विद्यमानमणिविशेषस्य उपकण्ठे समीपे । वक्षःप्रदेशे इत्यर्थः । हारो मुक्तावलिः, पाणौ वेणुश्च वर्तते, व्रजयुवतियुतः नन्दव्रजस्त्रीपरिवृतः पीताम्बरः नः पातु रक्षतु ॥ ९३ ॥

**मुरारिणा वारिविहारकाले**
**मृगेक्षणानां मुषितांशुकानाम् ।**
**करद्वयं वा कचसंहतिर्वा**
**प्रमीलनं वा परिधानमासीत् ॥ ९४ ॥**

वारिविहारकाले जलक्रीडासमये मुरारिणा कृष्णेन मुषितानि चौर्येण गृहीतानि अंशुकानि वस्त्राणि यासां तासां मृगस्य ईक्षणमिव ईक्षणं

यासां तासाम् । मुग्धाङ्... ...ठान्तरमस्ति । करद्वयं वा । अत्र वाशब्दः समुच्चये, ... ...कुचसंहतिर्वा केशसमूहोऽपि, प्रमीलनं वा नयनयोर्मुकु... ...सीद् यद्वै जातम् । कयाचित्करद्वयेन मदनसद... ...याचित्केशपाशेन, कयाचि- न्नयनयोर्मुकुलीभाव एव कृत ... ॥

यासां गोपाङ्गनानां लसद्...ततरा लोललीलाकटाक्षा
यन्नासाचारुमुक्तामणिरुचिनिकरव्योमगङ्गाप्रवाहे ।
मीनायन्तेऽपि तासामतिरभसचलच्चारुलीलालकान्ता
भृङ्गायन्ते यदङ्घ्रिद्वयसरसिरुहे पातु पीताम्बरो नः ॥

यासां गोपाङ्गनानां लसन्तः असिततराः अतिशयेन अशुक्लवर्णाः । प्रान्तयोः कृष्णवर्णाः लोललीलाकटाक्षाः यस्य कृष्णस्य नासा नासिका तस्यां चारुः सुन्दरः मुक्तामणिः तस्य रुचयः कान्तयः तासां निकरः समूहः स एव व्योमगङ्गाप्रवाहः तस्मिन् मीनायन्ते मत्स्या इवाचरन्ति, यासां गोपाङ्गनानाम् अतिरभसः अत्यन्तवेगः तेन चलन्तः अत एव चारवः लीलालकान्ताः विलासयुतधम्मिल्लाः यस्य कृष्णस्य अङ्घ्रिद्वयं तदेव सरसीरुहं कमलं तस्मिन्नपि भृङ्गायन्ते भ्रमरा इवाचरन्ति तासां संबन्धी पीताम्बरः कृष्णः नः अस्मान्पातु ॥ ९५ ॥

यद्वेणुश्रेणिरूपस्थितसुषिरमुखोद्गीर्णनादप्रभिन्ना
एणाक्ष्यस्तत्क्षणेन त्रुटितनिजपतिप्रेमबन्धा बभूवुः ।
अस्तव्यस्तालकान्ताः स्फुरदधरकुचद्वन्द्वनाभिप्रदेशाः
कामावेशप्रकल्प्यप्रकटितपुलकाः पातु पीताम्बरो नः ॥

यस्य कृष्णस्य वेणोः श्रेणिरूपेण पङ्क्तिरूपेण स्थितानि सुषिरमुखानि विवरवदनानि तेभ्यः उद्गीर्णेन उद्गिरणेन नादेन प्रभिन्नाः प्रकर्षेण मुक्ताः। कृष्णवेणुगानं श्रुतवत्य इत्यर्थः। एणानां मृगाणामक्षिणी इव अक्षिणी यासां तथोक्ताः तत्क्षणेन तदानीं कामावेशेन प्रकल्प्यः प्रकर्षेण सान्द्रतया संपादितः प्रकटितः बहिः प्रवर्तमानः पुलको रोमाञ्चो यासां ताः स्फुरन् अधरश्च कुचयोर्द्वन्द्वं च नाभिश्च तासां समाहारः तस्य प्रदेशा यासां ताः, अस्ता विशीर्णा व्यस्ताः प्रदेशे ग्रथिताः अलकान्ता धम्मिल्लाः यासां ताः, त्रुटितः त्यक्तः निजपथिषु स्वीयभर्तृषु प्रेमबन्धः प्रेमसंबन्धो याभिस्ताः तथोक्ताः बभूवुः स पीताम्बरः नः अस्मान्पातु ॥ ९६ ॥

देवक्या जठराकरे समुदितः क्रीतो गवां पालिना
नन्देनानकदुन्दुभेर्निजसुतापण्येन पुण्यात्मना ।
गोपालावलिमुग्धहारतरलो गोपीजनालंकृतिः
स्थेयाद्वो हृदि संततं स मधुरः कोऽपीन्द्रनीलो मणिः॥

देवक्या जठरमुदरं तदेवाकरः खनिः तत्र समुदितः उत्पन्नः, पुण्यात्मना अदृष्टवता गवां पालिना गोपालकेन नन्देन निजसुता स्वीयपुत्रिका सैव पण्यं मूल्यं तेन आनकदुन्दुभेः वसुदेवात्क्रीतः, गोपालनामावलिः सैव मुग्धहारः समीचीनमुक्ताकलापः तस्य तरलः नायकमणिः, गोपीजनानामलंकृतिः स प्रसिद्धः कोऽपि इत्थमिति वक्तुमशक्यः मधुरो हृद्यः इन्द्रनीलमणिः वः युष्माकं हृदि संततं स्थेयात् तिष्ठतु ॥ ९७ ॥

पीठे पीठनिषण्णबालकगले तिष्ठन्स गोपालको
यन्त्रान्तः स्थितदुग्धभाण्डमपवभिद्याच्छाद्य घण्टारवम् ।

**वक्त्रोपान्तकृताञ्जलिः कृतशिरः कम्पं पिबन्यः पयः**
**पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत् ॥ ९८ ॥**

पीठे उपवेष्टुं दारुणा रचितवस्तुविशेषे पीठे निषण्णः स्थितः स चासौ बालकश्च तस्य गले । अंसयोरित्यर्थः । तिष्ठन् । अयं भावः— पीठं भुवि दत्त्वा तदुपरि पीठान्तरं दत्त्वा तत्र बालकं संस्थाप्य तदंसयोः पदद्वयं विन्यस्य तिष्ठामिति । यन्त्रं शिक्यं तस्यान्तर्मध्ये स्थितं दुग्धभाण्डं क्षीरघटम् अवमिथ विवरं कृत्वा घण्टारवं घण्टाध्वनिम् आच्छाद्य पिधाय वक्त्रस्योपान्ते प्रान्ते कृताञ्जलिः सन् । एकेन हस्तेन घण्टां गृहीत्वा एकेन हस्तेनाञ्जलिबन्धं संपाद्येत्यर्थः । कृतशिरः कम्पं यथा तथा पयः क्षीरं पिबन्, एतादृशवेलायामागतगोपिकानयनयोः गण्डूषेण वदनस्थक्षीरेण फूत्कारं निःष्ठीवनं करोतीति फूत्कारकृत् यो गोपालकः स पायात् रक्षतु । अस्मानिति शेषः ॥ ९८ ॥

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इत्यादिवाक्यार्थो मया जन्मान्तरेऽनुष्ठित इत्यनुमीयत इत्याह—

**यज्ञैरीजिमहे धनं ददिमहे पात्रेषु नूनं वयं**
**वृद्धान्भेजिमहे तपश्चकृमहे जन्मान्तरे दुश्चरम् ।**
**येनास्माकमभूदनन्यसुलभा भक्तिर्भवद्वेषिणी**
**चाणूरद्विषि भक्तकल्मषमुषि श्रेयःपुषि श्रीजुषि ॥**

वयं जन्मान्तरे पूर्वजन्मनि यज्ञैः ईजिमहे इन्द्रादीन्पूजितवन्तः । यजतेर्लिट्युत्तमबहुवचनम् । पात्रेषु निजपात्रेषु धनं ददिमहे दत्तवन्तः । वृद्धान् तपोवृद्धान् भेजिमहे सेवितवन्तः । दुःखेन चरितुं शक्यं दुश्चरम् ।

त्वयुग्ममित्यर्थः । तपः कृच्छ्रचान्द्रायणादि चरमदे कृतवन्तः, नूनं निश्चितम् । कुतो निश्चितमित्याशङ्कयाह—येनेति । येन कारणेन अस्माकं अन्यसुलभा न भवतीत्यनन्यसुलभा भवं संसारं द्वेष्टुं शीलमस्यास्तीति भवद्वेषिणी भक्तिः चाणूरस्य चाणूरनामकमल्लस्य द्विट् शत्रुः तस्मिन्, भक्तकल्मषम् आश्रितदुरितं मुष्णाति हरतीति तथोक्तस्तस्मिन् श्रेयांसि धर्मार्थादिपुरुषार्थान् पुष्णातीति तथोक्तः तस्मिन् श्रियं रुक्मिणीं सेवत इति तस्मिन् अभूज्जातम् । श्रीकृष्णे भक्तिः कारणं विना न भवतीति तत्कारणं जन्मान्तरे कृतं पूर्वोक्तमेवेत्यनुमीयत इति ॥ ९९ ॥

त्वयि प्रसन्ने मम किं गुणेन
त्वय्यप्रसन्ने मम किं गुणेन ।
रक्ते विरक्ते च वरे वधूनां
निरर्थकः कुङ्कुमपत्रभङ्गः ॥ १०० ॥

अस्मिन्पद्ये हे कृष्णेत्यध्याहार्यम् । हे कृष्ण त्वयि प्रसन्ने सति मयि दयां कुर्वेति सति मम गुणेन किं किं प्रयोजनम् । किंचिदपि प्रयोजनं नास्तीत्यर्थः । तत्र दृष्टान्तमाह— रक्त इति । वरे प्रिये रक्ते अनुरागवति सति वधूनां कुङ्कुमपत्राणां कुङ्कुमरचितमकरिकापत्राणां भङ्गः रचना निरर्थकः व्यर्थः । विरक्ते च सति स निरर्थकः । विषयेषु विरक्तस्यालंकारशतेऽप्यप्रवृत्तिरिति भावः ॥ १०० ॥

गायन्ति क्षणदावसानसमये सानन्दमिन्दुप्रभा
रुन्धत्यो निजदन्तकान्तिनिवहैर्गोपाङ्गना गोकुले ।

मथ्नन्त्यो दधि पाणिकङ्कणझणत्कारानुकारं जवा-
व्यावल्गद्वसनाञ्चला यमनिशं पीताम्बरोऽव्यात्स नः ॥

निजानां स्वीयानां दन्तानां कान्तयः तासां निवहाः समूहाः इन्दोः चन्द्रस्य प्रभाः कान्तीः रुन्धत्यः प्रतिहताः कुर्वत्यः, जवात् वेगात् व्यावल्गन्ति विशेषेण चलितानि वसनाञ्चलानि वस्त्रप्रान्तानि यासां ताः, पाण्योः हस्तयोः कङ्कणानां झणत्कारः। झणदित्यनुकरणशब्दः तत्कारः तत्करणं तस्यानुकारः अनुकरणमनुगुणं यस्मिन्कर्मणि तद्यथा तथा दधि मथ्नत्यः गोपाङ्गनाः गोकुले नन्दव्रजे क्षणदावसानसमये उषः काले आनन्देन सहितं यथा तथा यं कृष्णं गायन्ति स पीताम्बरः कृष्णः नः अस्मान् अनिशं संततं अव्यात् रक्षतु ॥ १०१ ॥

अंसालम्बितवामकुण्डलभरं मन्दोन्नतभ्रूलतं
किंचित्कुञ्चितकोमलाधरपुटं साचिप्रसारेक्षणम् ।
आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गिललितं जाने जगन्मोहनम् ॥

अंसे भुजशिरसि आलम्बितमालम्ब्यमानम्। वेष्टमानमित्यर्थः। वामं वामकर्णे विद्यमानं तच्च तत्कुण्डलं च तदेव भरो यस्य तम्। वामपार्श्वस्थकुण्डलस्यांसप्राप्तिर्नान्यस्येति भावः। मन्दा निम्नस्था च उन्नता उत्तानस्था च तादृशौ भ्रुवौ लते इव यस्य तम्। वेणुगानवेलायां मुखे वामभागस्य नम्रत्वात्कुण्डलस्याप्यंसप्राप्तिः भ्रुवोऽपि नम्रतेति भावः। किंचित्कुञ्चितः ईषन्मुकुलितः कोमलो मृदुलः अधरपुटो येन तम्, साचि तिर्यक्प्रसारः दर्शनं ययोस्ते तथोक्ते ईक्षणे नेत्रे यस्य तम्। वेणुगान-

वेलायां तिर्यग्दृष्टिः स्वभावसिद्धेति भावः । आलोलाश्चपलाः ताश्च ता अङ्गुलयः पल्लवा इव तैः मुरलिकां वेणुं मुदा संतोषेण आपूरयन्तम्, तिरश्च ता भङ्गयो नतयः ताभिर्ललितम् ईप्सितम्, जगन्मोहनं जगदेकसुन्दरं कल्पतरोर्मूले जाने ॥ १०२ ॥

मल्लैः शैलेन्द्रकल्पः शिशुरितरजनैः पुष्पचापोऽङ्गनाभि-
र्गोपैस्तु प्राकृतात्मा दिवि कुलिशभृता विश्वकायोऽप्रमेयः ।
क्रुद्धः कंसेन कालो भयचकितदृशा योगिभिर्ध्येयमूर्ति-
र्दृष्टो रङ्गावतारे हरिरमरगणानन्दकृत्पातु युष्मान् ॥

रङ्गे कंसं प्रति विनोदनप्रदर्शनभूप्रदेशविशेषे अवतारे आगमने तस्मिन् । कंसपुरोभागं प्रत्यागमनवेलायामित्यर्थः । यो हरिः कृष्णः मल्लैश्चाणूरादिभिः शैलेन्द्रकल्पः हिमवत्सदृशः । ईषदसमाप्तौ कल्पप्रत्ययः । तादृशः सन् दृष्टः, इतरजनैः मल्लव्यतिरिक्तजनैः शिशुः सन्, दृष्ट इत्यनुषज्यते । अङ्गनाभिः पुष्पचापो मन्मथः सन् दृष्टः, गोपैस्तु प्राकृतात्मा अयमपि ईदृशः पृथग्जन इति दृष्टः, दिवि अन्तरिक्षे कुलिशं वज्रं बिभर्तीति कुलिशभृत् तेन इन्द्रेण विश्वं समस्तं कायो देहो यस्य सः प्रमाविषयः प्रमेयः स न भवतीत्यप्रमेयः तादृशः संदृष्टः, भयेन चकिते चपले दृशौ नेत्रे यस्य तेन कंसेन क्रुद्धः कालः यमः सन् दृष्टः, योगिभिः ध्यातुं योग्या मूर्तिः कायो यस्य तादृशः सन् दृष्टः, सः अमराणां आनन्दं करोतीत्यानन्दकृत् हरिः युष्मान् पातु रक्षतु ॥ १०३ ॥

संविष्टो मणिविष्टरेऽङ्कतलमध्यासीनलक्ष्मीमुखे
कस्तूरीतिलकं मुदा विरचयन्हर्षात्कुचौ संस्पृशन् ।

अन्योन्यस्मितचन्द्रिकाकिसलयैराराधयन्मन्मथं
गोपीगोपपरीवृतो यदुपतिः पायाज्जगन्मोहनः ॥१०४॥

मणिविष्टरे गारुत्मतमणिरूपपीठविशेषे संविष्टः आसीनः अङ्कतलमुत्सङ्गप्रदेशम् । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । अध्यासीनाया लक्ष्म्या रुक्मिण्याः मुखे कस्तूरीतिलक मुदा संतोषेण विरचयन् विशेषेण रचयन् । अनेन स्वस्याप्यनुलेपधारित्वमुक्तम् । दृप्तौ कुचौ संस्पृशन् गृह्णन्, अन्यः अन्यः अन्योन्यम् । 'कर्मव्यतिहारे सर्वनाम्नो द्वे स्तः समासवच्च बहुलम्' इति कर्मव्यतिहारे द्विर्भावः । अन्यशब्दयोरसमासवत्त्वात्प्रथमैकवचनं पूर्वपदस्य, द्वितीयायेकवचनान्तत्वं परपदस्येति प्रक्रिया ज्ञेया । तस्य स्मितमेव चन्द्रिका तस्याः किसलयैः पल्लवैः । ज्योत्स्नावद्विद्यमानमन्दहासाङ्कुरैरित्यर्थः । मन्मथमाराधयन् । अनेन परस्परालिङ्गनं सकलभूषणवत्त्वं चोक्तम् । गोपीगोपपरीवृतः । सुरदानवगन्धर्वाणामेव कृष्णपरिवारत्वात् तत्कन्याभिरावृत इत्यर्थः । मोहयतीति मोहनः जगन्मोहनो यदुपतिः श्रीकृष्णः पायात् रक्षतु । अस्मानिति शेषः ॥ १०४ ॥

आकृष्टे वसनाञ्चले कुवलयश्यामा त्रपाधःकृता
दृष्टिः संवलिता रुषा कुचयुगे स्वर्णप्रभे श्रीमति ।
बालः कश्चन चूतपल्लव इति भ्रान्तास्मितास्यश्रियं
श्लिष्यंस्तामथ रुक्मिणीं नतमुखीं कृष्णः स पुष्णातु नः॥

यस्या वसनाञ्चले वस्त्रैकदेशे । उत्तरीये इत्यर्थः । आकृष्टे अपहृते सति अथ अनन्तरं त्रपया लज्जया अधःकृता अधोभागे प्रवर्तिता कुवलय-

श्यामा उत्पलवद्नीलवर्णा दृष्टिः रुचा कान्त्या स्वर्णस्य प्रभेव प्रभा यस्य, तस्मिन् श्रीमति सौन्दर्यवति कुचयुगे स्तनयुगे संवलिता लग्ना, ताम् उत्तरीयापहरणे सति लज्जया युक्ताम् अत एव नतमुखीं बालः कश्चन चूतपल्लव इति यत्कुचयुगे कश्चन चूतपल्लवो वर्तत इति हेतोः । अयं भावः— कुचकान्तिनयनकान्त्योर्मेलने चूतपल्लवो वर्तत इति भ्रमित्वेति । चोरवल्लभ इत्यसंगतः पाठः । प्रान्ते समीपे स्मितं यस्याः सा तथोक्ता आस्यस्य मुखस्य श्रीः कान्तिः यस्यास्तां रुक्मिणीं श्लिष्यन् आलिङ्गन् सः उत्तरीयापहर्तृत्वादिविशेषणविशिष्टः कृष्णः अस्मान् पुष्णातु ॥

रुक्मिणीकृष्णसंवादं कविराह—

**उर्व्यां कोऽपि महीधरो लघुतरो दोर्भ्यां धृतो लीलया**
**तेन त्वं दिवि भूतले च सततं गोवर्धनो गीयसे ।**
**त्वां त्रैलोक्यधुरं वहामि कुचयोरग्रे न तद्गण्यते**
**किं वा केशव भाषणेन बहुना पुण्यैर्यशो लभ्यते ॥**

उर्व्यां लोकत्रयमध्ये कस्यांचिद्भुवि कोऽपि यः कश्चन अतिशयेन लघुः लघुतरः । दृढतर इति पाठे अदृढतर इति पदच्छेदः । तूलपिण्डवत्प्रशिथिलावयवो योऽगो वर्तत इत्यर्थः । अत एव लघुः । उभयथापि नार्थभेदः । महीधरः गोवर्धनपर्वतः दोर्भ्यां हस्ताभ्यां लीलया विलासेन । अनायासेनेत्यर्थः । धृतः उद्धृतः । तेन पर्वतधारणेन, त्वं दिवि स्वर्गे भूतले च सततं सदा गोवर्धनः गोवर्धननामकपर्वतमुद्धृतवानिति गीयसे उच्यसे । त्रयाणां लोकानां समाहारस्त्रिलोकी सैव त्रैलोक्यम् । स्वार्थे ष्यञ् । तस्य धरतीति धरः । पचाद्यच्प्रत्ययः । त्वां कुचयोरग्रे वहामि, तद्वहनं न गण्यते । गणनां न प्राप्नोति । बहुना भाषणेन किं वा ?

किमपि प्रयोजनं नास्तीत्यर्थः। पुण्यैः अदृष्टविशेषैः यशः कीर्तिः लभ्यते प्राप्यते। जनैरिति शेषः। अयं भावः— उर्व्यां लघुतरः कोऽपीत्यनेन ध्रियमाणपदार्थस्यातिलघुत्वमुक्तम्। दोर्भ्यां धृत इत्यनेन क्रियासौलभ्यं प्रतिपादितम्, हस्तेन कार्यस्य कर्तुं सुलभत्वात्। त्वां त्रैलोक्यधर इत्यनेन ध्रियमाणपदार्थस्यापि गौरवं प्रतिपादितम्। कुचयोरग्रे वहामीत्यनेन वहनक्रियाया अतिदुष्करत्वं प्रतिपादितम्, हस्तेनाप्यन्येन धर्तुमशक्यत्वादिति। तव पर्वतवहनमतिसुलभं मम तु त्वद्वहनमतिदुर्लभमिति परिकरालंकारः, विशेषणानामभिप्रायगर्भत्वात्। पुण्यैर्यशो लभ्यत इत्यत्र विशेषोक्तिरलंकारः, कृष्णभरणरूपसामग्र्या सत्यामपि तत्कार्यकीर्त्यसंभवात्। तयोः संसृष्टिः ॥ १०१ ॥

संध्यावन्दन भद्रमस्तु भवते भोः स्नान तुभ्यं नमो
भो देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम्।
यत्र क्वापि निषद्य यादवकुलोत्तंसस्य कंसद्विषः
स्मारं स्मारमघं हरामि तदलं मन्ये किमन्येन मे ॥

हे संध्यावन्दन प्रातर्मध्याह्नसायंकालेषु क्रियमाणक्रियाविशेष। ब्रह्मादित्ययोरभेदस्मरणरूपेत्यर्थः। भवते तुभ्यं भद्रं मङ्गलमस्तु। 'चतुर्थी चाशिष्यायुष्यमद्रभद्र–' इत्यादिना चतुर्थी। भोः स्नान तुभ्यं नमः। 'नमःस्वस्ति–' इत्यादिना चतुर्थी। भो देवाः पितरश्च, तर्पणं तृप्तिः तस्य विधिः करणं तस्मिन्। युष्माकमिति शेषः। अहं न क्षमः अशक्तः क्षम्यताम् क्षमा क्रियताम्। यत्र क्वापि यत्र कुत्रचित्प्रदेशे निषद्य उपविश्य यादवानां कुलस्य वंशस्य उत्तंसः शेखरः तस्य कंसं द्वेष्टीति कंसद्विट् तस्य। कृष्णमित्यर्थः। 'अधीगर्थ–' इत्यादिना कर्मणि षष्ठी। स्मारं स्मारं

स्मृत्वा स्मृत्वा । कंसमथनोऽहं कंसमथनोऽहमिति ध्यात्वा ध्यात्वेत्यर्थः । आभीक्ष्ण्ये णमुल् । ' नित्यवीप्सयोः ' इति द्विर्भावः । अहं पापं हरामि । तत् कंसमथनस्मरणम् अलं पापनिवर्तने पर्याप्तं क्षममित्यर्थः । मन्ये । अन्येन संध्यावन्दनादिना मे मम किं किं प्रयोजनम् । किमपि प्रयोजनं नास्तीत्यर्थः ॥ १०७ ॥

हे गोपालक हे कृपाजलनिधे हे सिन्धुकन्यापते
हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव ।
हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां
हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥

हे गोपालक, हे कृपा दया सैव जलं तस्य निधिः समुद्रः तस्य संबुद्धिः । हे सिन्धोः कन्या लक्ष्मीः तस्याः पतिः तस्य संबुद्धिः । हे गजेन्द्रे करुणा दया तस्याः पारः परतीरम् । अन्त इति यावत् । तत्पारीणः । गजेन्द्रनिमित्तमत्यन्तदयां कृतवानित्यर्थः । तस्य संबुद्धिः । हे रामानुज, हे जगत्त्रयगुरो, हे पुण्डरीकाक्ष, हे गोपीजननाथ, मां पालय रक्ष । त्वां विना परमन्यम् । देवतान्तरमित्यर्थः । न जानामि । न स्मरामि । त्वद्व्यतिरिक्तं देवतान्तरं न स्मरामि । त्वमेव मां पालयेति भावः ॥ १०८ ॥

कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं
नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम् ।
सर्वाङ्गे हरिचन्दनं च कलयन्कण्ठे च मुक्तावलिं
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥१०९॥

ललाटफलके ललाटप्रदेशे कस्तूरीतिलकम्, वक्षःस्थले उरःप्रदेशे कौस्तुभम्, नासाग्रे नवमौक्तिकम्, करतले वेणुम्, करे करयोर्ह-स्तयोः कङ्कणं करभूषणम्, कण्ठे मुक्तावलिम्, सर्वाङ्गे शरीरमात्रे हरिचन्दनं च कलयन् यथायोग्यं वहन् गोपस्त्रीपरिवेष्टितः स प्रसिद्धो गोपालचूडामणिः गोपालश्रेष्ठः । श्रीकृष्ण इत्यर्थः । विजयते सर्वोत्कर्षेण वर्तते । 'विपराभ्यां जेः' इत्यात्मनेपदम् ॥ १०९ ॥

**कालिन्दीबहुलप्रवाहरभसं संस्तम्भयस्तत्क्षणा-**
**च्छैलान्विद्रवयन्मृगान्विवशयन्गोवृन्दमानन्दयन् ।**
**गोपान्संभ्रमयन्मुनीन्मुकुलयन्सप्त स्वराञ्जृम्भय-**
**न्नोंकारार्थमुदीरयन्विजयते वंशीनिनादः शिशोः ॥**

इति श्रीलीलाशुकविरचिते
श्रीकृष्णकर्णामृते
द्वितीय आश्वासः ॥

कालिन्द्या यमुनाया बहुलप्रवाहः तस्य रभसं वेगं संस्तम्भयन् प्रतिरोधनं कुर्वन् । संस्तम्भवच्छब्दात् तत्करोतीतिणिचि णेरिष्ठवद्भावान्मतुब्लोपे सति संस्तम्भयतिति रूपसिद्धिः । एवमुत्तरत्र शत्रन्तशब्दानां प्रक्रिया ज्ञेया । तत्क्षणात् तदानीमेव शैलान् पर्वतान् विद्रावयन् विद्रवतः कुर्वन्, मृगान् विवशयन् परवशान्कुर्वन्, गोवृन्दं गोवत्सतर्णकानां समूहम् आनन्दयन् आनन्दवत्कुर्वन् गोपान् संभ्रमयन् संभ्रमवतः कुर्वन्, मुनीन् नारदादिमुनीन् मुकुलयन् मुकुलवतः कुर्वन् । अञ्जलिबन्धवतः कुर्वन्नित्यर्थः । सप्त स्वरान् निषादादिषट्स्वरभेदान् जृम्भ-

यन् प्रकाशवतः कुर्वन्, ओंकारार्थं ब्रह्म उदीरयन् प्रतिपादयन् । अखण्डानन्दाविर्भावसंपादकः सन्नित्यर्थः । शिशोः कृष्णस्य वंशीनिनादः वेणुरवः विजयते सर्वोत्कर्षेण वर्तते । 'विपराभ्यां जेः' इत्यात्मनेपदम् ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणपशुपतिरुमल-
भट्टोपाध्यायपुत्रेण कोदण्डाम्बागर्भशुक्तिमुक्ता-
मणिना पापयल्लयसूरिणा विरचितायां
श्रीकृष्णकर्णामृतव्याख्यायां
स्वर्णचषकसमाख्यायां
द्वितीयोऽध्यायः ॥



# तृतीय आश्वासः ॥

---

**अस्ति स्वस्त्ययनं समस्तजगतामभ्यस्तलक्ष्मीस्तनं**
**वस्तु ध्वस्तरजस्तमोभिरनिशं न्यस्तं पुरस्तादिव ।**
**हस्तोदस्तगिरीन्द्रमस्तकतरुप्रस्तारविस्तारित-**
**स्रस्तस्वस्तरुसूनसंस्तरलसत्प्रस्ताविराधास्तुतम् ॥**

समस्तजगतां सकललोकजन्तूनां स्वस्त्ययनं क्षेमकारणम् । वर्षवाताशनिभ्यो रक्षकमित्यर्थः । 'स्वस्त्याशीःक्षेमपुण्यादौ' इत्यमरः । अभ्यस्तौ बहुवारं संवद्धौ लक्ष्म्याः स्तनौ येन तत्, ध्वस्ते भ्रष्टे रजस्तमसी राजसतामसगुणौ यैस्तैः । नष्टराजसतामसगुणत्वेन शुद्धसत्त्वप्रधानचित्तानामित्यर्थः । अनिशं सदा पुरस्तात् अग्रे न्यस्तमिव । करतलामलकवत्स्थितमित्यर्थः । हस्तेन करेण उदस्तः उद्धृतः स चासौ गिरीन्द्रश्च तस्य मस्तकेषु शिखरेषु तरवो वृक्षाः तेषां प्रस्ताराः समूहाः तेषु विस्तारितानि । विकसितानीति यावत् । तानि च तानि स्रस्तानि भुवं प्रविष्टानि तानि च तानि स्वस्तरूणां कल्पवृक्षाणां सूनानि कुसुमानि च तेषां संस्तराः समूहाः तैर्लसत् प्रकाशमानम् । यद्वा संस्तरास्तल्पाः तेषु लसत प्रकाशमानम्, प्रस्ताविनी स्तुतिमती सा चासौ राधा च । 'पुंवत्कर्मधारय—' इत्यादिना पुंवत्त्वात्स्त्रीप्रत्ययलोपः । तया स्तुतं वस्तु कृष्णाख्यमस्ति । गोवर्धनोद्धरणवेलायां कृष्णोपासनार्थे गोवर्धनपर्वतोत्पन्नकल्पवृक्षकुसुमैः कुसुमतल्पेषु वा प्रकाशमानं राधास्तुतं श्रीकृष्णाख्यं वस्तु इत्यर्थः ॥ १ ॥

राधाराधितविभ्रमाद्भुतरसं लालित्यरत्नाकरं
साधारण्यपदव्यतीतसहजस्मेराननाम्भोरुहम् ।
आलम्बे हरिनीलगर्वगरुता सर्वस्वनिर्वापणं
बालं वैणविकं विमुग्धमधुरं मूर्धाभिषिक्तं महः ॥

राधाया गोपिकाविशेषस्य आराधिता बहुमन्यमानाः ते च ते विभ्रमाः विलासाश्च तैः अद्भुता आश्चर्यसंपादका रसाः शृङ्गारादयो यस्य तत्, लालित्यं सौन्दर्यं तदेव रत्नं तस्य आकरं खनिम् । सौन्दर्योत्पत्तिस्थानमित्यर्थः । साधारण्यं साम्यं तस्य पदमधिकरणं तद्व्यतीतमतिक्रान्तम् । यद्वा साधारण्यपदवी साम्यमार्गः तामतीतमतिक्रान्तम् । निरुपममित्यर्थः । सहजस्मेरं स्वभावतो मन्दहासयुक्तमाननाम्भोरुहं मुखाम्भोजं यस्य तत्, हरिनील इन्द्रनीलः तस्य गर्वगरुताम‍हङ्काराङ्कुराणां सर्वस्वस्य समस्तपदार्थस्य निर्वापणं नाशकम् । 'हरिनीलगर्वगुरुता' इति समीचीन पाठः । तदानीमयमर्थः—गर्वगुरुता गर्वगौरवं तस्याः सर्वस्वनाशकमिति । वैणविकं वेणुनादनपरम्, विशेषेण मुग्धानां सुन्दराणामपि मधुरं सुन्दरम् । अतिसुन्दरमित्यर्थः । मूर्धाभिषिक्तं श्रेष्ठं बालकृष्णरूपं महस्तेजः आलम्बे आश्रये ॥ २ ॥

करिणामलङ्घ्यगतिवैभवं भजे
करुणावलम्बितकिशोरविग्रहम् ।
यमिनामनारतविहारि मानसे
यमुनावनान्तरसिकं परं महः ॥ ३ ॥

करिणाम्, गजैरित्यर्थः । 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी ।

अलङ्घ्यं लङ्घयितुमशक्यं तिरस्कर्तुमशक्यमित्यर्थः । गतिवैभवं गमनसंपत् यस्य तत्, करुणया वसुदेवादिषु दयया अवलम्बितः किशोरविग्रहो बालदेहो येन तत्, यमिनां योगिनां मानसे चित्ते अनारतविहारि, संततविहारि यमुनावनं यमुनाजलम्। 'जीवनं भुवनं वनम्' इत्यमरः। तस्य अन्ते मध्ये रसिकम्। यमुनाजलक्रीडानिष्णातमित्यर्थः। परमुत्कृष्टं महस्तेजः। श्रीकृष्णाख्यमित्यर्थः। भजे सेवे ॥ ३ ॥

**अतन्त्रितत्रिजगदपि व्रजाङ्गना-**
**नियन्त्रितं विपुलविलोचनाज्ञया।**
**समन्ततः सरसतरं विजृम्भतां**
**निरन्तरं मम हृदये परं महः ॥ ४ ॥**

अतन्त्रितमप्रयोजकम्, अप्रेरकमिति यावत्। त्रिजगत् जगत्त्रयं यस्य तत्। न कस्यापि प्रेर्यमित्यर्थः। तथापि विपुलविलोचनयोराज्ञया व्रजाङ्गनाभिः नन्दव्रजस्त्रीभिः नियन्त्रितं नियुज्यमानम्। प्रेर्यमित्यर्थः। समन्ततः सर्वत्र। सार्वविभक्तिकस्तसिल्। अतिशयेन सरसं सरसतरम्। 'द्विवचनविभज्य–' इत्यादिना तरप्। सर्वावयवेषु सुन्दरमित्यर्थः। परमुत्कृष्टं महस्तेजः। परब्रह्मेत्यर्थः। मम हृदये निरन्तरं सर्वदा विजृम्भतां प्रकाशताम्। त्रिजगदप्रेर्यमपि व्रजाङ्गनाकटाक्षप्रेर्यमिति विरोधः। व्रजाङ्गनाभिः सुकृतं कृतं न कस्यापीति न विरोधः। प्रथमशतके मनसि प्रतीतिमात्रम्, अत्र तु नैरन्तर्येण प्रतीतिप्रार्थनेति न विरोधः ॥ ४ ॥

**कन्दर्पप्रतिमल्लकान्तिविभवं कादम्बिनीबान्धवं**
**वृन्दारण्यविलासिनीव्यसनिनं वेषेण भूषामयम्।**

**मन्दस्मेरमुखाम्बुजं मधुरिमव्यामृष्टबिम्बाधरं**
**वन्दे कंदलितार्द्रयौवनवनं कैशोरकं शार्ङ्गिणः ॥**

कन्दर्पस्य प्रतिमल्लः प्रतिभटः । समान इत्यर्थः । कान्तीनां विभवो यस्य तत्, कादम्बिनी मेघपङ्क्तिः । 'कादम्बिनी मेघमाला' इत्यमरः । तस्या बान्धवं सुहृद्भूतम् । मेघपङ्क्तिवत्कृष्णवर्णमित्यर्थः । वृन्दारण्यविलासिन्यः गोपाङ्गनाः तासु व्यसनिनं जारचेष्टायुक्तम्, वेषेण अलंकारेण भूषामयं भूषणप्रचुरम् । सकलभूषणभूषितमित्यर्थः । मन्दस्मेरं मन्दहासयुक्तं मुखमम्बुजमिव यस्य तत्, मधुरिमा माधुर्यम् । पृथ्वादित्वादणाद्यभावे इमनिच् । तेन व्यामृष्टो व्याप्तः बिम्बवदधरो यस्य तत्, कंदलितं पल्लवितम् आर्द्रं नूतनं यौवनमेव वनं यस्य तत्, शार्ङ्गं धनुर्विशेषः तद्वान् शार्ङ्गी तस्य कृष्णस्येत्यर्थः । कैशोरकं बाल्यम् । 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' इति किशोरशब्दाद्वयोवचनाद्भावे अञ् । स्वार्थे कप्रत्ययः । वन्दे अभिवादये ॥ ५ ॥

**आमुक्तमानुषममुक्तनिजानुभाव-**
**मारूढविग्रहमगूढविदग्धलीलम् ।**
**आमृष्टयौवनममृष्टकिशोरभाव-**
**माद्यं महः किमपि माद्यति मानसे मे ॥ ६ ॥**

आमुक्तमीषत्त्यक्तं मानुषं मनुष्यसंबन्धि चरित्रं येन तत् । मानुषशब्दात् 'तस्येदम्' इत्यण् । अत एव अमुक्तः अत्यक्तः निजानुभावः स्वीयमहिमा पूतनावधादिको येन तत् । 'निजमात्मीयनित्ययोः' इति विश्वः । आरूढः स्वीकृतः विग्रहो देहो येन तत्, अगूढा अनाच्छा-

दिताः । प्रकाशमाना इत्यर्थः । विदग्धलीलाः प्रौढक्रियाः गोपस्त्रीरञ्जनादिका येन तत्, आमृष्टमीषद्व्याप्तं यौवनं यस्य तत्, अमृष्टं ईषद्गलत् किशोरभावो बाल्यं यस्य तत् किमपि वाचामगोचरम् आद्यं जगत्कारणं महस्तेजः कृष्णाख्यमित्यर्थः । मम मानसे भायति प्रकाशते । 'शमामष्टानां दीर्घः श्यनि' इति दीर्घः ॥ ६ ॥

ते ते भावाः सकलजगतीलोभनीयप्रभावा
  नानातृष्णासुहृदि हृदि मे काममाविर्भवन्तु ।
लीलावेणुक्वणितलसितस्मेरवक्त्रारविन्दा-
  न्नाहं जाने मधुरमपरं नन्दपुण्याम्बुपूरात् ॥

सकलाश्च ता जगत्यो भुवनानि । 'जगती भुवने भूमौ' इति शब्दार्णवे । ताभिः लोभनीयः प्रभावः सामर्थ्यं येषां ते तथोक्ताः ते ते प्रसिद्धा भावाः पदार्थाः नानातृष्णाः पुत्रवित्तादिविषयकबहुविधाशाः तासां सुहृदि मित्रे । नानाविधाशायुक्ते इत्यर्थः । मे मम हृदि काममस्त्यर्थं आविर्भवन्तु प्रकाशन्ताम् । लीलावेणोः क्वणितं नादः तेन लसितं प्रकाशितं स्मेरवक्त्रारविन्दं मन्दहासयुक्तमुखारविन्दं यस्य तत्तस्मात् । कार्ये कारणत्वमुपचारात् । अपरमन्यत् मधुरं हृद्यं वस्तु अहं न जानामि न पश्यामि । कृष्णादन्यः स्पृहणीयपदार्थो मम नास्तीति भावः ॥ ७ ॥

सुकृतिभिरादृते सरसवेणुनिनादसुधा-
  रसलहरीविहारनिरवग्रहकर्णपुटे ।
व्रजवरसुन्दरीमुखसरोरुहसारसिके
  महसि कदा नु मज्जति मदीयमिदं हृदयम् ॥ ८ ॥

सुकृतं पुण्यमेषामस्तीति सुकृतिनः तैरादृते उपलालिते, सरसो रसयुक्तः स चासौ वेणुनिनादश्च स एव सुधारसः तस्य लहरी उत्सेकः तत्र विहारः क्रीडा तत्र निरवग्रहः प्रतिबन्धरहितः कर्णयोः पुटः प्रदेशः यस्य तस्मिन्, व्रजे वरसुन्दर्यः श्रेष्ठरमण्यः तासां मुखान्येव सरोरुहाणि तेषु सारसिके हंसे । सदा गोपस्त्र्यधरपानलोलुपे इत्यर्थः । महसि तेजसि । श्रीकृष्णे इत्यर्थः । ममेदं मदीयम् । 'प्रत्ययोत्तरपदयोश्च' इति मादेशः । इदं चञ्चलशीलं हृदयं चित्तं कदा कस्मिन्काले मज्जति नु मज्जनं करिष्यति नु । अत्र नुः प्रश्नार्थः । 'नुः पृच्छायां विकल्पे च' इत्यमरः । 'विभाषा कदाकर्ह्योः' इति भविष्यति लट् ॥ ८ ॥

तृष्णातुरे चेतसि जृम्भमाणे
मुष्णन्मुहुर्मोहमहान्धकारम् ।
पुष्णातु नः पुण्यदयैकसिन्धोः
कृष्णस्य कारुण्यकटाक्षकेलिः ॥ ९ ॥

पुण्ये सति दयैकसिन्धोः दयैकसमुद्रस्य कृष्णस्य कारुण्यकटाक्षः दयाप्रधानापाङ्गदृष्टिः तस्य केलिर्विहारः, तृष्णा आशा तया आतुरे पीडिते चेतसि । नः इति शेषः । इतरत्र वियमानस्यापह्नुतिर्वा । मुहुः पुनः पुनः जृम्भमाणं वर्धमानं मोह एव महान्धकारस्तं मुष्णन् हरन् नः अस्मान् पुष्णातु रक्षतु ॥ ९ ॥

निखिलनिगममौलिलालितं
पदकमलं परमस्य तेजसः ।
व्रजभुवि बहुमन्महेतरां
सरसकरीषविशेषरूषितम् । १० ॥

निखिलाः समस्ताः ते च ते निगमानां वेदानां मौलयश्च । समस्तवेदान्ता इत्यर्थः । तैर्लालितं प्रतिपादितम्, व्रजभुवि नन्दव्रजप्रदेशे सरसो रसयुक्तः । आर्द्र इत्यर्थः । स चासौ करीषविशेषः । वत्सशकृदित्यर्थः । तेन स्नपितम्, परमस्य अतिदुर्ज्ञेयस्य तेजसः । कृष्णस्येत्यर्थः । पदकमलं पादपद्मं बहुमन्महेतराम् अतिशयेन बहुमानं कुर्महे । 'द्विवचन-' इत्यादिना तरप् । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यामुप्रत्ययः ॥ १० ॥

**उदारमृदुलस्मितव्यतिकराभिरामाननं**
**मुदा मुहुरुदीर्णया मुनिमनोम्बुजाम्रेडितम् ।**
**मदालसविलोचनव्रजवधूमुखास्वादितं**
**कदा नु कमलेक्षणं कमपि बालमालोकये ॥ ११ ॥**

उदाराणि गम्भीराणि तानि च तानि मृदुलस्मितानि च मन्दहसितानि च तेषां व्यतिकरः समूहः तेन अभिरामं सुन्दरमाननं मुखं यस्य तम्, मुहुः उदीर्णया पुनः पुनरुत्पन्नया मुदा हर्षेण मुनीनां मनांसि अम्बुजानीव तैराम्रेडितं पुनः पुनर्विचारितम् । मुनिभिरतिसंतोषेण सर्वदा ध्यातमित्यर्थः । मदेन अलसे मन्दे विलोचने यासां ताः ताश्च ता व्रजवध्वः नन्दव्रजयोषितश्च तासां मुखैरास्वादितम् अनुभूतम् । चुम्बितमित्यर्थः । कमले इव अक्षिणी नयने यस्य तम्, कमपि वाचामगोचरं बालं कदा कस्मिन्काले आलोकये नु द्रक्ष्यामि नु । 'विभाषा कदाकर्ह्योः' इति भविष्यति लट् । अत्र नुः प्रश्नार्थः । 'नु पृच्छायां विकल्पे च' इत्यमरः ॥ ११ ॥

**व्रजजनमदयोषिल्लोचनोच्छिष्टशेषी-**
**कृतमपि चपलाभ्यां लोचनाभ्यामुभाभ्याम् ।**

सकृदपि परिपातुं ते वयं पारयामः
कुवलयदलनीलं कान्तिपूरं कदा नु ॥ १२ ॥

व्रजजना गोपालाः तेषां मदयोषितः मदयुक्तस्त्रियः तासां विलोचनाभ्यां नेत्राभ्याम् उच्छिष्टशेषीकृतम् । अभूततद्भावे च्विः । 'अस्य च्वौ' इतीकारान्तत्वम् । अनुभूतशेषीकृतमपि । गोपस्त्रीनयनाभ्यां सम्यग्दृष्टमपीति यावत् । कुवलयं नीलोत्पलं तस्य दलवन्नीलम्, कान्तीनां पूरं प्रवाहम् । श्रीकृष्णमित्यर्थः । चपलाभ्यां चञ्चलाभ्यामुभाभ्यां लोचनाभ्यां कदा नु कस्मिन्काले नु परिपातुं पारयामः समर्था भविष्यामः । कदाचिदपि कृष्णस्वरूपं निषेवितुमस्माकं सामर्थ्यं नास्तीत्यर्थः ॥ १२ ॥

घोषयोषिदनुगीतयौवनं
कोमलस्तनितवेणुनिस्वनम् ।
सारभूतमभिरामसंपदां
धाम तामरसलोचनं भजे ॥ १३ ॥

घोष आभीरपल्ली । नन्दव्रज इति यावत् । तत्र योषितः स्त्रियः ताभिरनुगीतम् आनुगुण्येन गीयमानं यौवनं यस्य तत्, कोमलं मन्दं स्तनितं गर्जितं तद्वद्वेणुनिस्वनो यस्य तत्, अभिरामसंपदां सौन्दर्यसंपदां सारभूतं श्रेष्ठभूतम्, तामरसे कमले इव लोचने यस्य तत्, धाम तेजः भजे सेवे ॥ १३ ॥

लीलया ललितयावलम्बितं
मूलगेहमिव मूर्तिसंपदाम् ।

नीलनीरदविकासविभ्रमं
बालमेव वयमाद्रियामहे ॥ १४ ॥

ललितया ईप्सितया लीलया विलासेन अवलम्बितमाश्रितम् । समीचीनलीलायुक्तमित्यर्थः । मूर्तिः शरीरं तस्याः संपदां अवयवसौष्ठवसौन्दर्यादीनां मूलगेहमिव प्रधानगृहमिव स्थितम् । आकरमिति यावत् । नीलनीरदो नीलमेघः तस्य विकासविभ्रमाः प्रकाशविलासा इव यस्य तम्, बालमेव वयम् आद्रियामहे चिन्तयामः ॥ १४ ॥

वन्दे मुरारेश्चरणारविन्द-
द्वन्द्वं दयादर्शितशैशवस्य ।
वन्दारुवृन्दारकवृन्दमौलि-
मन्दारमालाविनिमर्दभीरु ॥ १५ ॥

दयया दर्शितं स्वीकृतं शैशवं बाल्यं येन तस्य । वसुदेवादिषु दयया शैशवं प्राप्तस्येत्यर्थः । मुरारेः श्रीकृष्णस्य वन्दारवः प्रणमनशीलाः ते च ते वृन्दारका देवाः तेषां वृन्दानि समूहाः तेषां मौलयः शिखाः तासु मन्दारमालाः कल्पप्रसूनमालिकाः तासां विनिमर्दः संमर्दः तस्माद्भीरु भयशीलम् । देवेषु प्रणतेषु सत्सु तच्छिरोमन्दारमालाभिः संमर्दितमित्यर्थः । चरणारविन्दद्वन्द्वं पादपङ्कजयुगं वन्दे अभिवादये । 'वदि अभिवादनस्तुत्योः' ॥ १५ ॥

यस्मिन्नृत्यति यस्य शेखरभरैः क्रौञ्चद्विपश्चन्द्रकी
यस्मिन्दृप्यति यस्य घोषसुरभिं जिघ्रन्वृषो धूर्जटेः ।

यस्मिन्सज्जति यस्य विभ्रमगतिं वाञ्छन्हरेः सिन्धुर-
स्तद्वृन्दावनकल्पकद्रुमवनं तं वा किशोरं भजे ॥

कौञ्चद्विषः षण्मुखस्य चन्द्रकाः पिच्छानि अस्य सन्तीति चन्द्रकी । मयूर इत्यर्थः । यस्य कृष्णस्य शेखराः शिखापद्ममालाः त एव भराः तैः शिखाबद्धमयूरपिच्छयुक्तमालाभरैः हेतुभिः यस्मिन्वने नृत्यति नर्तनं करोति । कृष्णशिरसि विद्यमानपिच्छस्तोमं दृष्ट्वा मयूरान्तरबुद्ध्या नृत्यतीत्यर्थः । धूर्जटेः शिवस्य वृषः वृषभः यस्य कृष्णस्य घोषे मजे सुरभिं धेनुं जिघ्रन् योनिप्रदेशे आघ्राणं कुर्वन् यस्मिन्वने दृप्यति माद्यति, हरेः इन्द्रस्य सिन्धुरो गजः । ऐरावत इति यावत् । यस्य कृष्णस्य विभ्रमगतिं लीलागमनं वाञ्छन् इच्छन् यस्मिन्वने सज्जति आसक्तो भवति, तत् षण्मुखमयूराद्यधिकरणभूतं वृन्दावनमेव कल्पकद्रुमाणां वनं तं वा यस्य शेखरेत्यादिविशेषणविशिष्टं बालकृष्णं वा भजे सेवे । वृन्दावनस्यापि कृष्णविहारभूमित्वात्तत्सेवाप्यदृष्टसंपादिकेति भावः । वृन्दावने पशुपालनवेलायां कृष्णदर्शनार्थं सर्वेषु देवेष्वागतेषु सत्सु तद्वाहनानामपि समागमनं तत्रेति न विरोधः ॥ १६ ॥

अरुणाधरामृतविशेषितस्मितं
वरुणालयानुगतवर्णवैभवम् ।
तरुणारविन्ददलदीर्घलोचनं
करुणामयं कमपि बालमाश्रये ॥ १७ ॥

अरुणश्चासावधरश्च सः अमृतमिव तेन विशेषितम् अतिशयितं स्मितं यस्य तम्; वरुणालयः समुद्रः तेनानुगतमनुसृतं वर्णस्य कान्तेः वैभवं संपत् यस्य तम् । समुद्रवन्नीलवर्णमित्यर्थः । तरुणं नूतनं तच्च तत्

अरविन्दे च तस्य दलवत् स्थिते लोचने यस्य तम्, करुणामयं दयास्वरूपं कमपि वाचामगोचरं बालं बालकृष्णम् आश्रये सेवे ॥ १७ ॥

**लावण्यवीचीरचिताङ्गभूषां**
**भूषापदारोपितपुण्यबर्हाम् ।**
**कारुण्यधारालकटाक्षमालां**
**बालां भजे वल्लववंशलक्ष्मीम् ॥ १८ ॥**

लावण्यम् कान्तिविशेषः तस्य वीच्यः तरङ्गाः । 'कृदिकारादक्तिनः' इति ङीष् । ताभिः रचिता अङ्गभूषाः तत्तदवयवभूषणानि यस्यास्ताम् । भूषणानामपि भूषणभूतकान्तिविशेषयुक्तामित्यर्थः । भूषापदम् अलंकारप्रदेशः तत्र आरोपितं न्यस्तं पुण्यबर्हं पवित्रपिच्छं यस्यास्ताम्। कारुण्यं दया तस्य धाराः प्रवाहा अस्यां सन्तीति धारालाः। करुणायुक्ता इत्यर्थः। कटाक्षमाला अपाङ्गदृष्टिसंततयः यस्यास्ताम्, बालाम्, वल्लववंशो यादवान्वयः तस्य लक्ष्मीम् । सकलसौभाग्यसंपादिकां श्रीकृष्णरूपामित्यर्थः । भजे सेवे ॥ १८ ॥

**मधुरैकरसं वपुर्विभोस्त-**
**न्मथुरावीथिचरं भजामहे ।**
**नगरीमृगशावलोचनानां**
**नयनेन्दीवरवर्षवर्षितम् ॥ १९ ॥**

मथुरावीथिषु चरतीति तथोक्तम् । 'चरेष्टः' इति टप्रत्ययः । मधुरैकरसं घनीभूतसौन्दर्यम्, अत एव नगरी पत्तनम् । मधुरेति यावत् । तत्र मृगशावस्य मृगशिशोः लोचने इव लोचने यासां तासां नयनान्येव

इन्दीवराणि कुवलयानि तेषां वर्षं वृष्टिः तेन वर्षितं दृष्टम् । युवतिभिरत्यादरेण बहुधा दृष्टमित्यर्थः । विभोः कृष्णस्य तत् प्रसिद्धं वपुः शरीरं भजामहे सेवामहे ॥ १९ ॥

पर्याकुलेन नयनान्तविजृम्भितेन
वक्त्रेण कोमलमदस्मितविभ्रमेण ।
मन्द्रेण मञ्जुलतरेण च जल्पितेन
नन्दस्य हन्त तनयो हृदयं धिनोति ॥ २० ॥

पर्याकुलेन चञ्चलेन, नयनान्तयोः नेत्राञ्चलयोः विजृम्भितेन वीक्षणेन, कोमलः मृदुलः मदस्मितस्य विभ्रमो विलासो यस्य तेन वक्त्रेण मुखेन च, मन्द्रेण गम्भीरेण मञ्जुलतरेण अतिशयेन हृद्येन जल्पितेन वचसा, नन्दस्य तनयः श्रीकृष्णः हृदयं चित्तम् । ममेति शेषः । धिनोति प्रीणयति । 'धिवि प्रीणने' इत्यस्माल्लट् । हन्तेति हर्षे । 'हन्त हर्षेऽनुकम्पायाम्' इति शब्दार्णवे ॥ २० ॥

कंदर्पकण्डूलकटाक्षबन्दी-
रिन्दीवराक्षीरभिकृष्यमाणान् ।
मन्दस्मिताधारमुखारविन्दा-
न्वन्दामहे वल्लवधूर्तपादान् ॥ २१ ॥

कंदर्पस्य कण्डूलाः । कण्डूशब्दान्मत्वर्थे लः । अतिदुःसहा इत्यर्थः । ते च ते कटाक्षाश्च तैर्बन्दीः बद्धाः । मन्मथस्यातिदुःसहकटाक्षपातैर्बद्धा इत्यर्थः । यद्वा, मन्मथप्रधानातिदुःसहकृष्णकटाक्षपातैर्बद्धा इति वार्थः । यद्वा, कंदर्पेण हेतुना कण्डूला अतिविलाससयुक्ताः कटाक्षा एव बन्द्यः

पुरुषबन्धका यासां तथोक्ताः । मन्मथप्रयुक्तात्यन्तविकारयुक्तकटाक्षरूपपुरुषबन्धका इत्यर्थः । इन्दीवरे कुवलये इव अक्षिणी नयने यासां ताः अभिलष्यमाणान् कामयमानान्, मन्दस्मितस्य आधारभूतं मुखारविन्दं येषां तान्, वल्लवा यादवाः ते च ते धूर्तपादाः धूर्तश्रेष्ठाः तान् । पूजाया बहुवचनम् । वन्दामहे अभिवादयामहे । 'अस्मदो द्वयोश्च' इति बहुवचनम् ॥ २१ ॥

लीलाटोपकटाक्षनिर्भरपरिष्वङ्गप्रसङ्गाधिक-
प्रीते रीतिविभागसंगरलसद्वेणुप्रणादामृते ।
राधालोचनलालितस्य ललितस्मेरे मुरारेर्मुदा
माधुर्यैकरसे मुखेन्दुकमले मग्नं मदीयं मनः ॥ २२ ॥

लीलाः विलासाः ताभिराटोपाः गम्भीराः ते च ते कटाक्षाश्च तेषां निर्भरपरिष्वङ्गः अत्यन्तसंबन्धः तस्य प्रसङ्गः सद्भावः तत्र अधिकप्रीतम् अतिशयेनासक्तं तस्मिन् । सदा कटाक्षलीलायामासक्ते इत्यर्थः । यद्वा, लीलाटोपकटाक्षैर्हेतुभिः निर्भरपरिष्वङ्गो गोपिकाकर्तृकगाढालिङ्गनं तस्य प्रसङ्गः प्रसक्तिः तस्याधिकप्रीते अत्यन्तसंतुष्टे इति वा । स्वीयकटाक्षमात्रेण गोपिकासु स्वयमेवागत्यालिङ्गनं कुर्वतीषु सतीषु तेन, संतुष्टे इति भावः । रीतयो गानभेदाः तासां विभागा रचनाः तेषां संगरः स्वस्वसीछवप्रयुक्तकलहः तेन लसत् मनोज्ञं वेणुप्रणादः अमृतमिव यस्य तस्मिन् । यद्वा, ललितं तत् च स्मेरं मन्दहासयुक्तं च तस्मिन्निति वा । माधुर्यमेकः केवलो रसो यस्य तस्मिन् । घनीभूतमधुररसवद्वियमाने इत्यर्थः । राधालोचनाभ्यां लालितस्य बहुमन्यमानस्य । सदा दृष्टस्येत्यर्थः । मुरारेः श्रीकृष्णस्य मुखमेवेन्दुः स कमलमिव तस्मिन् ममेदं मदीयं मनः मुदा संतोषेण मग्नं मज्जनं कृतवत् । अतिशयेन लग्नमित्यर्थः ॥ २२ ॥

शरणागतवज्रपञ्जरे
शरणे शार्ङ्गधरस्य वैभवे ।
कृपया धृतगोपविग्रहे
कियदन्यन्मृगयामहे वयम् ॥ २३ ॥

शरणं रक्षणं तदर्थमागताः । अस्मान्रक्षेति रक्षणार्थमागता इत्यर्थः। तेषां वज्रपञ्जरे अभेद्यशिलाविशेषनिर्मिते यन्त्राविशेषे । शरणागतरक्षके इत्यर्थः। अत एव कृपया दयया धृतो गोपालशरीरं येन तस्मिन्, शार्ङ्गं शृङ्गविकारो धनुर्विशेषः तस्य धरतीति धरः तस्य। विष्णोरित्यर्थः। वैभवे कृष्णरूपावतारे शरणे रक्षके विद्यमाने सति अन्यत् तद्व्यतिरिक्तं कियत् कं पदार्थं वयं मृगयामहे इति काकुः । अन्वेषणं न कुर्महे इत्यर्थः। स्वसंरक्षणार्थं कृष्णं विना अन्यं न भजामहे इति भावः ॥२३॥

जगत्त्रयैकान्तमनोज्ञभूमि-
श्चेतस्यजस्रं मम संनिधत्ताम् ।
रामासमास्वादितसौकुमार्यं
राधास्तनाभोगरसज्ञमोजः ॥ २४ ॥

जगतां त्रयं जगत्त्रयं तत्र एकान्तमनोज्ञं नितान्तसौन्दर्यम्। 'तीव्रैकान्तनितान्तानि' इत्यमरः। तस्य भूमिः आधारप्रदेशः। जगदेकसुन्दरमित्यर्थः। भूमिशब्दस्य नित्यस्त्रीलिङ्गत्वात् 'वेदाः प्रमाणम्' इतिवत् न सामानाधिकरण्यविरोधः। रामाभिः गोपस्त्रीभिः समास्वादितं सौकुमार्यं सौन्दर्यं यस्य तत् राधायाः स्तनाभोगः कुचपरिपूर्णता। वैपुल्यमिति यावत्। तस्य रसं जानातीति रसज्ञम्, ओजः तेजः मम चेतसि अजस्रं सदा संनिधत्तां संनिधानं कुरुतात्। तिष्ठत्वित्यर्थः ॥ २४ ॥

वयमेते विश्वसिमः
करुणाकरकीर्तिकिंवदन्त्याङ्के ।
अपि च विभो तव ललिते
चपलतरा मतिरियं बाल्ये ॥ २५ ॥

हे विभो व्यापकीभूत कृष्ण, अङ्के व्यापके त्वयि करुणाकरः कृष्णो दयासनिरिति कीर्तिः यशः तस्याः किंवदन्ती लोकप्रवादः तया एते वयं संसारे अतिदुःखिता वयं विश्वसिमः विश्वासं कुर्मः । इदादित्वात्सार्वधातुकस्यापीडागमः । अपि च त्वयि विश्वासमात्रमेव न, किं तु तव ललिते । 'ईप्सिते ललितेऽपि च' इति विश्वः । बाल्ये इयं मतिः मम बुद्धिः चपलतरा अतिशयेन चपला । सदा मम बुद्धिः तव बाल्योत्सुकेत्यर्थः । अतो मयि कृपा कर्तव्येति भावः ॥ २५ ॥

मधुरिमभरिते मनोभिरामे
मृदुलतरस्मितमुद्रिताननेन्दौ ।
त्रिभुवननयनैकलोभनीये
महसि वयं व्रजभाजि लालसाः स्मः ॥२६॥

मधुरिम्णो सौन्दर्यादीनां भरः अतिशयः । 'अथातिशयो भरः' इत्यमरः । सोऽस्य संजात इति तथोक्तः । 'तदस्य संजातम्'– इति इतच् । तस्मिन्, मनोभिरामे हृद्ये, मृदुलतरमतिशयेन कोमलम् । 'द्विवचनविभज्य–' इत्यादिना तरप् । तच्च तत्स्मितं च तेन मुद्रितः चिह्नितः आननमिन्दुरिव यस्य तस्मिन्, त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । 'पात्राद्दिभ्यश्च ङीप्' । तस्य नयनाभ्याम् एकमेव लोभ-

नीयं स्पृहणीयम् । सकललोकस्थजननयनप्रार्थनीयमित्यर्थः । तस्मिन्, व्रजं नन्दव्रजं भजत इति तथोक्तः तस्मिन्, महसि तेजोविशेषे । कृष्णे इत्यर्थः । वयं लालसाः आसक्ताः स्मः भवामः । अस्तेरुत्तमबहुवचनम् ॥

मुखारविन्दे मकरन्दबिन्दु-
निष्यन्दलीलामुरलीनिनादे ।
व्रजाङ्गनापाङ्गतरङ्गभृङ्ग-
संग्रामभूमौ तव लालसाः स्मः ॥ २७ ॥

मकरन्दः पुष्परसः तस्य बिन्दवः तेषां निष्यन्दः प्रवाह इव लीलार्थं मुरल्या निनादो यस्य तस्मिन्, व्रजाङ्गनाः नन्दव्रजयोषितः तासामपाङ्गाः कटाक्षाः तेषां तरङ्गा वीचयः । संतन्यमानकटाक्षा इत्यर्थः । त एव भृङ्गा भ्रमराः तेषां संग्रामः कलहः तस्य भूमौ अधिकरणप्रदेशे । गोपीकटाक्षविषयभूते इत्यर्थः । नित्यस्त्रीलिङ्गत्वान्न सामानाधिकरण्यविरोधः । तव मुखारविन्दे लालसा आसक्ताः स्मः भवामः । अस्मिन्पक्षे अथ हे कृष्ण इत्यध्याहर्तव्यः ॥ २७ ॥

आताम्रायतलोचनांशुलहरीलीलासुधाप्यायितै-
र्गीताम्रेडितदिव्यकेलिभरितैः स्फीतं व्रजस्त्रीजनैः ।
स्वेदाम्भःकणभूषितेन किमपि स्मेरेण वक्त्रेन्दुना
पादाम्भोजमृदुप्रचारसुभगं पश्यामि दृश्यं महः ॥

आताम्रे ईषद्रक्ते ते च ते आयते दीर्घे च ते लोचने च तयोरंशवः किरणाः । दृष्टय इति यावत् । तेषां लहरी उत्सेकः तस्या लीला विलासाः ता एव सुधा अमृतं तया आप्यायितैः पूरितैः । अमृतायमा-

नकटाक्षविलासपूर्णैरित्यर्थः। गीतानि गानानि तैः आम्रेडिताः पुनरुक्ताः अभिनयात्मकगानसहिता इत्यर्थः। ताश्च ता दिव्यकेलयः अतिरमणीयनर्तनविशेषाः तासां भरः एषामस्तीति तथोक्ताः तैः। 'तदस्य संजातम्–' इति भरशब्दान्मत्वर्थे इतच्। व्रजस्त्रीजनैः स्फीतं सह विद्यमानमित्यर्थः। पादाम्भोजे इव तयोर्मृदुप्रचारः मन्दगमनं तत्र सुभगम्। मन्दगमनविशेषयुक्तमित्यर्थः। अभिनयप्रतिपादकगानसहितनर्तनविशेषयुक्तगोपस्त्रीजनैः सह विद्यमानमित्यर्थः। स्वेदाम्भःकणैः निदाघजलबिन्दुभिः भूषितेन अलङ्कृतेन स्मेरेण हासयुक्तेन वक्त्रेन्दुना मुखचन्द्रेण स्फीतं हृद्यमित्यर्थः। द्रष्टुं योग्यं दृश्यं किमपि वाचामगोचरं महः तेजः। कृष्णाख्यमित्यर्थः। पश्यामि ॥ २८ ॥

पाणौ वेणुः प्रकृतिसुकुमाराकृतौ बाल्यलक्ष्मीः
पार्श्वे बालाः प्रणयसरसालोकितापाङ्गलीलाः।
मौलौ बर्हं मधुरवदनाम्भोरुहे मौग्ध्यमुद्रे-
त्यार्द्राकारं किमपि कितवं ज्योतिरन्वेषयामः॥

पाणौ वेणुः, प्रकृत्या स्वभावेन सुकुमारा सुन्दरा चासावाकृतिः अवयवसंस्थानविशेषः तस्यां बाल्यलक्ष्मीः बालभावातिशयः, पार्श्वे प्रान्तप्रदेशे प्रणयेन प्रेम्णा सरसानि रसयुक्तानि आलोकितानि दृष्टयः यासां ताः अपाङ्गयोर्लीला विलासाः येषां ते तथोक्ता बालाः, मौलौ शिखायां बर्हं पिच्छम्, मधुरवदनाम्भोरुहे हृद्यमुखाम्बुजे मौग्ध्यमुद्रा सौन्दर्यरूपचिह्नम् इति अनेन प्रकारेण हेतुना वा। 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इति शब्दार्णवे। आर्द्रः सरसः आकारः अवयवसंस्थानविशेषो यस्य तत्, किमपि वाचामगोचरं कितवं वञ्चकम्। नवनीतादिचोरमित्यर्थः। ज्योतिः श्रीकृष्णाख्यम् अन्वेषयामः मृगयामहे ॥ २९ ॥

आरूढवेणुतरुणाधरविभ्रमेण
माधुर्यशालिवदनाम्बुजमुद्वहन्ती ।
कैशोरके वयसि कापि च कान्तियष्टि-
रालोक्यतां किमनया वनदेवता वः ॥ ३० ॥

हे वनदेवताः वृन्दावनदेवताः, युष्माकम् अनया परिदृश्यमानव्यर्थक्रियया किं किं प्रयोजनम्? किमपि प्रयोजनं नास्तीत्यर्थः। कैशोरके बाल्ये वयसि आरूढः वेणुः यस्मिन्सः तथोक्तः स चासौ तरुणाधरः कोमलाधरश्च तस्य विभ्रमेण विलासेन, माधुर्येण अवयवसंस्थानविशेषेण सौष्ठवेन शालि सुन्दरं तच्च वदनमम्बुजमिव उद्वहन्ती प्राप्ता सुमुखी इत्यर्थः। कापि च इत्थमिति वक्तुमशक्या कान्तिरेव यष्टिः सा तथोक्ता आलोक्यतां दृश्यताम्। कृष्णदर्शने सति सकलमप्यस्ति, तद्व्यतिरिक्तक्रियया किमपि नास्तीति भावः ॥ ३० ॥

अनन्यसाधारणकान्तिकान्त-
माक्रान्तगोपीनयनारविन्दम् ।
पुंसः पुराणस्य नवं विलासं
पुण्येन पूर्णेन विलोकयिष्ये ॥ ३१ ॥

अन्यसाधारणी न भवतीत्यनन्यसाधारणी। निरुपमेत्यर्थः। सा चासौ कान्तिश्च तया कान्तं मनोज्ञम्, आक्रान्ते वशीकृते गोपीनयने अरविन्दे इव येन तम्। कृष्णसौन्दर्येण गोपीनयनयोः कृष्ण एव प्रवेशः नान्यत्रेति भावः। पुराणस्य पुंसः आदिपुरुषस्य। परब्रह्मण इत्यर्थः। नवं मत्स्याद्यवतारापेक्षया नूतनं विलासं श्रीकृष्णमित्यर्थः। पूर्णेन अन्यूनेन पुण्येन सुकृतेन विलोकयिष्ये द्रक्ष्यामि ॥ ३१ ॥

साष्टाङ्गपातमभिवन्द्य समस्तभावैः
सर्वान्सुरेन्द्रनिकरानिदमेव याचे।
मन्दस्मितार्द्रमधुराननचन्द्रबिम्बे
नन्दस्य पुण्यनिचये मम भक्तिरस्तु ॥ ३२ ॥

सर्वान् सुरेन्द्रनिकरान् देवश्रेष्ठसमूहान् अष्टानामङ्गानां पातेन सह वर्तत इति साष्टाङ्गपातं यस्मिन्कर्मणि तद्यथा भवति तथा अभिवन्द्य प्रणम्य समस्तभावैः समस्ताभिप्रायैः । 'भावः सत्तास्वभावाभिप्राय-चेष्टात्मजन्मसु' इत्यमरः । सर्वप्रकारैरित्यर्थः । इदमेव वक्ष्यमाणमेव याचे प्रार्थये । प्रार्थनाविषयभूतमाह– मन्दस्मितेत्यादिना । मन्दस्मिते-नार्द्रं सरसम् अत एव मधुरं सुन्दरम् आननं चन्द्रबिम्बमिव तस्मिन्, नन्दस्य नन्दगोपस्य पुण्यनिचये पुण्यसमूहे । कृष्णे इत्यर्थः । कारणे कार्यत्वमुपचारात् । मम भक्तिरस्तु ॥ ३२ ॥

एषु प्रवाहेषु स एव मन्ये
क्षणोऽपि गण्यः पुरुषायुषेषु ।
आस्वाद्यते यत्र कयापि वृत्त्या
नीलस्य बालस्य निजं चरित्रम् ॥ ३३ ॥

एषु परिदृश्यमानेषु प्रवाहेषु प्रवाहवद्गच्छत्सु पुरुषाणामायुःषु पुरुषायुषेषु पुरुषजीवनकालेषु । पुरुषायुषेति 'अचतुर–' इत्यादिना निपातनात्साधुः । क्षणोऽपि स्वल्पत्वेन गण्योऽपि । अत्रापिशब्दो गर्हार्थे । स एव क्षण एव गण्यः श्रेष्ठत्वेन गणनीय इति मन्ये, यत्र यस्मिन्क्षणे कयापि वृत्त्या । येन केनचित्प्रकारेणेत्यर्थः । नीलस्य नीलवर्णस्य बालस्य बालकृष्णस्य निजं स्वीयं चरित्रम् । पूतनावधादिकमित्यर्थः । आस्वा-

यते अनुचिन्त्यते । स एव गम्यो भवतीति पूर्वेणान्वयः ॥ ३३ ॥

निसर्गसरसाधरं निजदयार्द्रदिव्येक्षणं
मनोज्ञमुखपङ्कजं मधुरसार्द्रमन्दस्मितम् ।
रसज्ञहृदयास्पदं रमितवल्लवीलोचनं
पुनः पुनरुपास्महे भुवनलोभनीयं महः ॥

निसर्गेण स्वभावेन सरसो रसयुक्तः अधरः यस्य तत्, निजा नित्या। 'निजमात्मीयनित्ययोः' इति विश्वः। सा चासौ दया च तया आर्द्रे दिव्ये श्रेष्ठे ईक्षणे नेत्रे यस्य तत्, मनोज्ञं सुन्दरं मुखं पङ्कजमिव यस्य तत्, मधुरसेन आर्द्रं सरसं मन्दस्मितं मन्दहासो यस्य तत्, रसज्ञाः ब्रह्मज्ञाः। अत्र रसशब्दो ब्रह्मपरः। तथा च श्रुतिः— 'रसो वै सः-' इत्यादिः। तेषां हृदयान्येव आस्पदम् अवस्थानं यस्य तत्, रमिते सतो-षिते वल्लवीनां लोचने येन तत्, भुवनैः लोभनीयं महः पुनः पुनः मुहुर्मुहुः उपास्महे ॥ ३४ ॥

स कोऽपि बालः सरसीरुहाक्षः
सा च व्रजस्त्रीजनपादधूलिः ।
मुहुस्तदेतद्युगलं मदीये
मोमुह्यमानेऽपि मनस्युदेतु ॥ ३५ ॥

स प्रसिद्धः, कोऽपि वाचामगोचरः, सरसीरुहे कमले इव अक्षिणी यस्य स तथोक्तः। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्। बालः बालकृष्णः, सा प्रसिद्धा व्रजस्त्रीजनानां नन्दव्रजयोषिज्जनानां पाद-धूलिश्च, तदेतद्युगलं बालकृष्णः पादधूलिश्चेत्येतद्द्वयं ममेदं मदीयम् ।

'प्रश्नयोत्तरपदयोश्च' इति मादेशः । तस्मिन् मनसि चित्ते, मोमुह्य- मानेऽपि अत्यन्तवैचित्र्यं प्राप्ते सत्यपि । अतिमोहवेलायामित्यर्थः । मुहुः पुनः पुनः उदेतु प्रतीयात् । स्फुरतु इत्यर्थः ॥ २५ ॥

मयि प्रयाणाभिमुखे च वल्लवी-
स्तनद्वयीदुर्ललितः स बालः ।
शनैः शनैः श्रावितवेणुनिस्वनो
विलासवेषेण पुरः प्रतीयताम् ॥ २६ ॥

मयि प्रयाणाभिमुखे च लोकान्तरप्रयाणोन्मुखे सति । अत्र च शब्दः पूर्वश्लोकोक्तमूर्च्छासमुच्चयार्थः । एवं च मूर्च्छावेलायां मरणवेलायामपी- त्यर्थः । वल्लवीनां गोपीनां स्तनयोः द्वयी युगलम् । 'टिड्ढाणञ्द्वयसज्—' इत्यादिना ङीप् । 'स्तनादीनां द्वित्वा विशिष्टजात्यभिप्रायेण' इति वामनः । तया दुर्ललितः श्रान्तः स प्रसिद्धः बालः बालकृष्णः शनैः शनैः मन्दं मन्दं श्रावितः श्रवणपथं गमितः वेणुनिस्वनो वेणुनिनादो येन स तथोक्तः सन् विलासवेषेण लीलार्थं परिकल्पितबर्हाद्याभरणेन उपल- क्षितः पुरः अग्रे । ममेति शेषः । प्रतीयतां स्फुरतु ॥ २६ ॥

अतिभूमिमभूमिमेव वा
वचसां वासितवल्लवीस्तनम् ।
मनसामपरं रसायनं
मधुराद्वैतमुपास्महे महः ॥ २७ ॥

मनसां वचसां वा । अत्र वाशब्दस्य समुच्चयोऽर्थः । 'विकल्पोपमान- योरेवार्थे च समुच्चये' इत्यमरः । मनसामपीत्यर्थः । अतिभूमिम् अति-

शयेन विषयं वा अभूमिम् अविषयं वा । सगुणत्वेन विषयत्वं निर्गुणत्वेनाविषयत्वमिति न विरोधः । अपरं प्रसिद्धरसायनादन्यत् मधुराद्वैतं मधुरैकरसं रसायनं लेह्यविशेषः । सर्वावयवसुन्दरमित्यर्थः । वासितौ आवासीकृतौ वल्लवीनां स्तनौ येन तत् । गोपस्त्रीकुचमण्डले सदा विद्यमानमित्यर्थः । महः तेज एव । श्रीकृष्णमेवेत्यर्थः । उपास्महे । भूमिः शब्दस्य नित्यस्त्रीलिङ्गत्वान्न सामानाधिकरण्यविरोधः ॥ ३७ ॥

जननान्तरेऽपि जगदेकमण्डने
कमनीयधाम्नि कमलायतेक्षणे ।
व्रजसुन्दरीजनविलोचनामृते
चपलानि सन्तु सकलेन्द्रियाणि मे ॥ ३८ ॥

जगतामेकं मुख्यं तच्च तत् मण्डनमलंकारः तस्मिन्, कमनीयं स्पृहणीयं धाम तेजो यस्य तस्मिन्, कमलवत् आयते दीर्घे ईक्षणे नेत्रे यस्य तस्मिन्, व्रजसुन्दरीजनाः घोषयोषिज्जनाः तेषां विलोचनानाम् अमृते सुधारूपे । श्रीकृष्णे इत्यर्थः । जननान्तरेऽपि । अपिशब्दोऽनुक्तसमुच्चयार्थे । अस्मिञ्जन्मनि जन्मान्तरेऽपीत्यर्थः । मे मम सकलेन्द्रियाणि चपलानि आसक्तानि सन्तु भवन्तु ॥ ३८ ॥

मुनिश्रेणीवन्द्यं मदभरलसद्वल्लववधू-
स्तनश्रोणीबिम्बस्तिमितनयनाम्भोजसुभगम् ।
पुनःश्लाघाभूमिं पुलकितगिरां नैगमगिरां
घनश्यामं वन्दे किमपि महनीयाकृति महः ॥

मुनीनां श्रेण्यः पङ्क्तयः ताभिर्वन्द्यं नमस्कार्यम्, मदभरो मदातिशयः

तेन लसन्त्यः प्रकाशमानाः वल्लवानां वध्वः स्त्रियः तासां स्तनश्रोणी-बिम्बेषु कुचनितम्बप्रदेशेषु विषयेषु स्तिमिते निश्चले ते च ते नयने अम्भोजे इव ताभ्यां सुभगं सुन्दरम् । मत्तगोपस्त्रीकुचजघनप्रदेशाननि-मिषदृष्ट्या पश्यन्तमित्यर्थः । पुनः अथापि पुलका आसां सन्तीति पुलकिताः । अहमहमिकया ब्रह्मप्रतिपादकत्वेन संजातपुलका इव स्थिता इत्यर्थः । गिरः अवान्तरवाक्यानि यासां तासां निगमा वेदाः तेषां सम्बन्धिन्यः नैगम्यः ताश्च ता गिरः वाचश्च तासाम् । उपनिषदामि-त्यर्थः । श्लाघाभूमिं प्रतिपादनविषयम् । भूमिशब्दस्य नित्यस्त्रीलिङ्गत्वात् 'वेदाः प्रमाणं इतिवत्र सामानाधिकरण्यविरोधः । घनवत् मेघवत् श्यामम्, कमनीया स्पृहणीया आकृतिः अवयवसंस्थानविशेषो यस्य तत्तथोक्तम्, किमपि वाचामगोचरं महः तेजः श्रीकृष्णाख्यमित्यर्थः । वन्दे अभिवादये ॥ ३९ ॥

**अनुचुम्बतामपि चलेन चेतसा**
**मनुजाकृतेर्मधुरिमश्रियं विभोः ।**
**अयि देव कृष्ण दयितेति जल्पता**
**मपि नो भवेयुरपि नाम तादृशः ॥ ४० ॥**

चलेनापि चेतसा अस्थिरेणापि चेतसा मनुजस्य मनुष्यस्य आकृतिरि-वाकृतिः अवयवसंस्थानविशेषो यस्य तस्य विभोः कृष्णस्य मधुरिम्णः सौन्दर्यादेः श्रियं शोभाम् अनुचुम्बतां ध्यायताम् । सकृत्सकृत्कृष्णध्यानं कुर्वतामित्यर्थः । यादृशा दिवसाः पुरुषार्था वा अभूवन्, अयि देव हे देव हे कृष्ण हे दयित प्रिय इत्यनेन प्रकारेण जल्पतां वदतां नः अपि अस्माकमपि तादृशाः दिवसा. पुरुषार्था वा भवेयुः अपि नाम संभवि-

ध्यान्ति किम्? कृष्णविषयकध्यानं परं मम तादृशध्यानेन भाव्यमिति भावः ॥ ४० ॥

**किशोरवेषेण कृशोदरीदृशां**
**विशेषदृश्येन विशाललोचनम् ।**
**यशोदया लब्धयशोनवाम्बुधे-**
**र्निशामये नीलनिशाकरं कदा ॥ ४१ ॥**

कृशं सूक्ष्ममुदर जठरं यासां तास्तथोक्ताः कृशोदर्यः । 'नासिकोदरौष्ठ—' इत्यादिना ङीप् । तासां दृशः लोचनानि तासाम् । ताभिरित्यर्थः । 'कृत्यानां कर्तरि वा' इति षष्ठी । विशेषमत्यर्थं यथा तथा द्रष्टुं योग्यो दृश्यः तेन किशोरवेषेण उपलक्षितम्, विशाले लोचने यस्य तम्, यशोदया लब्धं प्राप्तं तच्च तत् यशः तदेव नवाम्बुधिः नूतनसमुद्रः । तस्य कीर्तिसमुद्रस्य नूतनस्य प्रसिद्धसमुद्रापेक्षया वैलक्षण्यम् । तच्च शुक्लवर्णत्वात् । कीर्त्तेः शौक्ल्यं कविसमयसिद्धम् । अत एव निशाकरे वैलक्षण्यमुच्यते । नीलनिशाकरं कृष्णवर्णचन्द्रम् । यशोदाकीर्त्तिसमुद्रवृद्धिसंपादकत्वान्निशाकरत्वनिरूपणं युज्यते । कदा निशामये द्रक्ष्यामि । 'विभाषा कदाकर्ह्योः' इति भविष्यति लट् । शमेर्दर्शनार्थत्वान्न मित्संज्ञा । अत एव निशामये इति प्रयोगः । प्रत्यक्षकाङ्क्षितत्वान्न प्रथमशतकविरोधः ॥ ४१ ॥

**प्रकृतिरवतु नो विलासलक्ष्म्याः**
**प्रकृतिजडं प्रणतापराधवीथ्याम् ।**
**सुकृतिकृतपदं किशोरभावे**
**सुकृतिकृतप्रणिधानपात्रमोजः ॥ ४२ ॥**

किशोरभावे बाल्ये विलासलक्ष्म्याः विलाससंपत्तेः प्रकृतिः मूलकारणम्, प्रणता नम्राः । भक्ता इति यावत् । तेषामपराधवीथ्याम् अपराधपरम्परायां विषये प्रकृतिजडम् । भक्तेष्वपराधं कुर्वत्स्वपि तेषु तमपराधमजानदिव विद्यमानमित्यर्थः । सुकृतमदृष्टमेषामस्तीति सुकृतिनः तेषु कृतं पदं स्थानं येन तत् । पुण्यकृत्सु कृतसंनिधानमित्यर्थः । सुकृतिभिः विद्वद्भिः कृतं प्रणिधानमैकाग्र्यम् । 'मनःप्रणिधानम्' इति पाठे सुकृतिमन इत्यत्र षष्ठीतत्पुरुषः । तस्य पात्रं विषयः, ओजः तेजः । श्रीकृष्णाख्यमित्यर्थः । नः अस्मान् अवतु रक्षतु । 'वेदाः प्रमाणमितिवत् प्रकृतिशब्दस्य नित्यस्त्रीलिङ्गत्वान्न सामानाधिकरण्यविरोधः ॥ ४२ ॥

> अपहसितसुधामदावलेपै-
> रधिकमनोहरमार्द्रमन्दहासैः ।
> व्रजयुवतिविलोचनावलेह्यं
> रमयतु धाम रमावरोधनं नः ॥ ४३ ॥

अपहसितः परिहसितः सुधाया अमृतस्य मदः तद्धेतुकः अवलेपः अहंकारः यैस्तैः आर्द्रमन्दहासैः अधिकमनोहरमत्यन्तहृद्यम्, व्रजयुवतयो व्रजस्त्रियः तासां विलोचनाभ्याम् अवलेह्यम् अत्यादरेण दृश्यम्, रमाया लक्ष्म्या अवरोधनमन्तःपुरम् । लक्ष्म्याः कृष्णवक्षःस्थले सदा विद्यमानत्वादिति भावः । धाम तेजः । श्रीकृष्णाख्यमित्यर्थः । नः अस्मान् रमयतु संतोषयतु ॥ ४३ ॥

> अङ्कुरितस्मेरदशाविशेषै-
> रश्रान्तहर्षामृतवर्षमक्ष्णाम् ।

संक्रीडतां चेतसि गोपकन्या-
धन्यस्तनस्वस्त्ययनं महो नः ॥ ४४ ॥

अङ्कुरिताः संजाताङ्कुराः ते च ते स्मेरस्य मन्दहासस्य दशाविशेषाः अवस्थाविशेषाः तैः अक्ष्णां नयनानाम् अश्रान्तहर्षस्य निरन्तरसंतोषस्य अमृतवर्षं सुधावृष्टिरूपम्। प्रेक्षकजनचक्षुषां निरन्तरसंतोषसंपादकमित्यर्थः। गोपकन्यानां धन्यौ कृतार्थौ। समीचीनावित्यर्थः। तौ च तौ स्तनौ च तयोः स्वस्त्ययनं मङ्गलायतनम्। 'स्वस्ति मङ्गलनिष्पापक्षेमेष्वाशीर्वचःस्वपि' इति शब्दार्णवे। महः तेजः। कृष्णाख्यमित्यर्थः। अस्माकं चेतसि चित्ते संक्रीडतां सम्यग्विहरतु ॥ ४४ ॥

मृगमदपङ्कसंकरविशेषितवन्यमहा-
गिरितटगण्डगैरिकघनद्रवविद्रुमितम्।
अजितभुजान्तरं भजत गोपवधूपृथुल-
स्तनकलशस्थलीघुसृणमर्दनकर्दमितम् ॥४५॥

मृगमदस्य कस्तूर्याः पङ्कः कर्दमः तस्य संबन्धः तेन विशेषितमतिशयितं तच्च तत् वने भवं वन्यं महांश्चासौ गिरिश्च। 'आन्महतः समानाधिकरणजातीययोः' इति महच्छब्दस्य आकारः। तस्य तटे प्रदेशे गण्डः गण्डशैलः। गिरेः सकाशादधःपतितस्थूलोपल इत्यर्थः। गण्डशैल इति नामैकदेशे नामग्रहणम्। तत्र गैरिकं धातुविशेषः तस्य घनद्रवः तेन विद्रुमितं प्रवालीकृतम्। रक्तीकृतमित्यर्थः। अजितस्य कृष्णस्य भुजान्तरं वक्षः, यद्वा, अजितं केनापि जेतुमशक्यं भुजान्तरं वक्षो यस्य तमिति वा। गोपवधूनां पृथुलौ स्तनौ कलशाविव तयोः स्थली तत्र घुसृणमङ्गरागविशेषः तस्य मर्दनेन गाढालिङ्गनजातसंघर्षेण

कर्मितं पङ्किलं भजत । हे इन्द्रियाणीति शेषः ॥ ४५ ॥

आमूलपल्लवितलीलमपाङ्गजालै-
रासिञ्चती भुवनमादृतगोपवेषा ।
बाल्याकृतिर्मृदुलमुग्धमुखेन्दुबिम्बा
माधुर्यसिद्धिरवतान्मधुविद्विषो नः ॥ ४६ ॥

अपाङ्गजालैः कटाक्षसमूहैः मूलपर्यन्तमामूलं पल्लवा आसां सजाता इति पल्लविताः लीला यस्मिन्कर्मणि तद्यथा तथा भुवनं जगत् आसिञ्चती । सम्यक् त्रिभुवनं सकलसंतोषयुक्तं यथा तथा कटाक्षैः पश्यन्तीत्यर्थः । आदृतः अङ्गीकृतः गोपवेषः गोपालाकारः यया सा, मृदुलं कोमलं मुग्धं सुन्दरं मुखमिन्दुबिम्बमिव यस्याः सा तथोक्ता, मधुरमेव माधुर्यम् । स्वार्थे ष्यञ् । तस्य सिद्धिः प्राप्तिः । मधुरैकरसेत्यर्थः । मधुद्विषः कृष्णस्य बाल्याकृतिः बालभावे अवयवसंस्थानविशेषः नः अस्मान् अवतात् रक्षतु ॥ ४६ ॥

विरणन्मणिनूपुरं व्रजे
चरणाम्भोजमुपास्स्व शार्ङ्गिणः ।
सरसे सरसि श्रियाश्रितं
कमलं वा कलहंसनादितम् ॥ ४७ ॥

व्रजे नन्दव्रजे विशेषेण रणन्तौ ध्वनन्तौ मणिनूपुरौ मणिखचितमञ्जीरौ यस्य तत्, अत एव सरसे जलसहिते सरसि कासारे श्रिया कान्त्या श्रितम् । आश्रितकान्तिमदित्यर्थः । कलहंसानां नादः अस्य

संजातः तत्तथोक्तं कमलं वा पद्मद्वयवत्स्थितम् । 'उपमायां विकल्पे वा' इत्यमरः । शार्ङ्गिणः कृष्णस्य चरणाम्भोजं पादकमलद्वयम् उपास्स्व भजस्व । हे मनुज इति शेषः ॥ ४७ ॥

> शरणमशरणानां शारदाम्भोजनेत्रं
> निरवधिमधुरिम्णा नीलवेषेण रम्यम् ।
> स्मरशरपरतन्त्रस्मेरनेत्राम्बुजाभि-
> र्व्रजयुवतिभिरव्याद्ब्रह्म संवेष्टितं नः ॥ ४८ ॥

न विद्यते शरणं रक्षकं येषां ते तथोक्ताः तेषां शरणं रक्षकम्, शरत्कालसंबन्धिनी शारदे अम्भोजे इव नेत्रे यस्य तत्, निरवधिः अवधिः यस्मात्स चासौ मधुरिमा च तेन । अत्यन्तहृद्यत्वेनेत्यर्थः । नीलवेषेण नीलवर्णेन रम्यम्, स्मरशरा मन्मथबाणाः तैः परतन्त्रे पराधीने स्मेरे विकसिते नेत्रे अम्बुजे इव यासां ताभिः व्रजयुवतिभिः घोषयोषिद्भिः संवेष्टितमावृतं ब्रह्म श्रीकृष्णः नः अस्मान् अव्यात् रक्षतु ॥ ४८ ॥

> सुव्यक्तकान्तिभरसौरभदिव्यगात्र-
> मव्यक्तयौवनपरीतकिशोरभावम् ।
> गव्यानुपालनविधावनुशिष्टमव्या-
> दव्याजरम्यमखिलेश्वरवैभवं नः ॥ ४९ ॥

सुव्यक्तः प्रकाशमानः कान्तीनां भरः अतिशयः यस्य तत्तथोक्तं सौरभं परिमलयुक्तं, दिव्यगात्रं सुन्दरदेहो यस्य तत्, अव्यक्तमस्फुटं तच्च तद्यौवनं च तेन परीतः संबद्धः किशोरभावो यस्य तत्, यद्वा

अव्यक्तमस्फुटं यौवनं यस्य तत्तथोक्तं तच्च तत्परीतो व्याप्तः किशोरभावो बाल्यं यस्य तत्, गव्या गोसमूहाः। 'खलगोरथात्' इति समूहार्थे यत्प्रत्ययः। 'गव्या गोत्रा गवाम्' इत्यमरः। तासामनुपालनं रक्षणम्। पाठभेदे तु गव्यस्य नवनीतादेरनुपारणं भक्षणमित्यर्थः। तस्य विधिर्विधानम्। करणमिति यावत्। तत्र अनुशिष्टं शिक्षितम्, अव्याजरम्यं भूषणाद्युपाधिभिर्विना रम्यम्, अखिलेश्वरस्य विष्णोः वैभवम्। कृष्ण इत्यर्थः। नः अस्मान् अव्यात् रक्षतु ॥ ४९ ॥

अनुगतममरीणामम्बरालम्बिनीनां
　नयनमधुरिमश्रीनर्मनिर्माणसीम्नाम्।
व्रजयुवतिविलासव्यापृतापाङ्गमव्या-
　त्त्रिभुवनसुकुमारं देवकैशोरकं नः ॥ ५० ॥

अम्बरमाकाशमालम्बन्त इत्यम्बरालम्बिन्यः तासां नयनयोः मधुरिमश्रीः सौन्दर्यातिशयः तया नर्मनिर्माणं तस्य सीमभूतानाम्। संकेतसूचकचेष्टाप्रभेदयुक्तानामित्यर्थः। अमरीणाम्। देवस्त्रीभिरित्यर्थः। अनुगतमनुसृतम्। अन्तरिक्षगतदेवस्त्रीभिरनुगम्यमानमित्यर्थः। व्रजयुवतीनां विलासेषु व्यापृताः प्रवर्तमानाः अपाङ्गाः कटाक्षाः यस्य तत्, त्रयाणां भुवनानां समाहारः त्रिभुवनम्। पात्रादित्वान्न ङीप्। तत्र सुकुमारं सुन्दरं देवस्य कृष्णस्य कैशोरकं शैशवं नः अस्मान् अव्यात् रक्षतु ॥ ५० ॥

आपादमाचूडमतिप्रसक्तै-
　रापीयमाना यमिनां मनोभिः।

गोपीजनज्ञातरसावताद्वो
गोपालभूपालकुमारमूर्तिः ॥ ५१ ॥

पादावभिव्याप्य आपादं चूडामभिव्याप्य आचूडम् । अत्र अभिविधावाङ् । आपादमस्तकमित्यर्थः । अतिप्रसक्तैः अत्यादरेण प्रवर्तमानैः यमिनां मुनीनां मनोभिः आपीयमाना । निदिध्यासितेत्यर्थः । गोपीजनैः ज्ञातः रसः शृङ्गारादिर्यस्याः सा, गोपालभूपालो नन्दः तस्य कुमारः कृष्णः तस्य मूर्तिः शरीरं वः युष्मान् अवतात् रक्षतु ॥ ५१ ॥

दिष्ट्या वृन्दावनमृगदृशां विप्रयोगाकुलानां
प्रत्यासन्नं प्रणयचपलापाङ्गवीचीतरङ्गैः ।
लक्ष्मीलीलाकुवलयदलश्यामलं धाम कामा-
न्पुष्णीयाद्वः पुलकमुकुलाभोगभूषाविशेषम् ॥

विप्रयोगेण विरहेण आकुलानां मन्मथपीडितानां वृन्दावनमृगदृशां गोपस्त्रीणां प्रणयेन प्रेम्णा चपलाश्चञ्चलाः ते च ते अपाङ्गाश्च तेषां वीच्यः कटाक्षाः तासां तरङ्गैः संततिभिः दिष्ट्या हठात् पुलका रोमाञ्चाः त एव मुकुलाः कुड्मलाः, यद्वा पुलका मुकुला इव तेषामाभोगपरिपूर्णता स एव भूषाविशेषः अलंकारविशेषो यस्मिन्कर्मणि तद्यथा भवति तथा प्रत्यासन्नं प्रत्यक्षम् । व्यवहितमपि निदिध्यासनवशात्प्रत्यक्षमिव भातीति विरोधः । कृष्णविरहातुराणां गोपस्त्रीणां स्वशरीरेषु पुलकोद्गमं यथा तथा निदिध्यासनवेलायां हठात्प्रत्यक्षमिव स्थितमित्यर्थः । लक्ष्म्याः लीलाकुवलयदलवत् श्यामं नीलवर्णं धाम तेजः । कृष्णाख्यमित्यर्थः । वः युष्माकं कामान् मनो-

रथान् पुष्णीयात् । संपादयत्वित्यर्थः । कृष्णे अक्रूरेण साकं मथुरां प्रति गते सति तद्विरहेण सदा तद्गतचित्तानां गोपस्त्रीणां प्रत्यक्षमिव भातं धाम पुष्णातु इत्यर्थः ॥ ५२ ॥

जयति गुहशिखीन्द्रपिञ्छमौलिः
सुरगिरिगैरिककल्पिताङ्गरागः ।
सुरयुवतिविकीर्णसूनवर्ष-
स्नपितविभूषितकुन्तलः कुमारः ॥ ५३ ॥

गुहस्य षण्मुखस्य शिखिनो मयूराः तेषामिन्द्रः अधिपतिः । श्रेष्ठ इत्यर्थः । तस्य पिञ्छं मौलौ यस्य सः, सुरगिरिर्मेरुः तस्य गैरिकं धातुविशेषः तेन कल्पितः संपादितः अङ्गरागः विलेपनाविशेषः यस्य स तथोक्तः, सुरयुवतयो देवस्त्रियः ताभिः विकीर्णानि विक्षिप्तानि तानि च तानि सूनानि पुष्पाणि तेषां वर्षे तेन स्नपितं स्नानम् भावे क्तः । तेन विभूषिताः अलंकृताः कुन्तलाः केशा यस्य सः कुमारः कृष्णः जयति सर्वोत्कर्षेण वर्तते ॥ ५३ ॥

मधुरमन्दशुचिस्मितमञ्जुलं
वदनमङ्गजमङ्गलवेल्लितम् ।
विजयतां व्रजबालवधूजन-
स्तनतटीविलुठन्नयनं विभोः ॥ ५४ ॥

मधुरं हृद्यं तच्च तत् शुचि शुभ्रं तच्च तत् स्मितं हासः तेन मञ्जुलं सुन्दरम्, अङ्गजेन मन्मथेन वेल्लितं चञ्चलीकृतम् । मन्मथाविष्टमित्यर्थः । अत एव व्रजबालवध्वः नन्दव्रजबालस्त्रियः ता एव जनः तस्य स्तनतटी

स्तनप्रदेशः तत्र विलुठन्ती परिवर्तमाने नयने यस्य तत्, विभोः कृष्णस्य वदनपङ्कजं मुखकमलं विजयतां सर्वोत्कर्षेण वर्तताम् । 'विपराभ्यां जेः' इत्यात्मनेपदम् ॥ ५४ ॥

अलसविलसन्मुग्धस्निग्धस्मितं व्रजसुन्दरी-
मदनकदनस्विन्नं धन्यं महद्वदनाम्बुजम् ।
तरुणमरुणज्योत्स्नाकार्त्स्न्यस्नपिताधरं
जयति विजयश्रेणीमेणीदृशां मदयन्महः ॥

अलसं मन्दं विलसत्प्रकाशमानं मुग्ध सुन्दर स्निग्धं स्वच्छं स्मितं हासो यस्य तत्, व्रजसुन्दरीणां मदनकदनं रतिः तेन स्विन्न स्वेदयुक्तम्, तरुणं नूतनम् । कोमलमित्यर्थः । अरुणज्योत्स्नया रक्तकान्त्याः कार्त्स्न्यं सर्वस्वम् । अलक्तरक्तवर्णमित्यर्थः । तेन स्नपितः व्याप्तः अधरो यस्य तत्, धन्यं कृतार्थम् । निरुपाधिसुन्दरमिति यावत् । महः तेजोरूपं महत् श्रेष्ठ वदनाम्बुजम् एणीनां हरिणीनां दृशाविव दृशौ नेत्रे यासां तासां विजयश्रेणीं प्रौढिपङ्क्तिं मदयत् मदवतीं कुर्वत् । मदवतीशब्दात्तत्करोतीति ण्यन्ताल्लटः शतरि पुंवद्भावमतुब्लोपेषु मदयदिति रूपसिद्धिर्ज्ञेया । जयति सर्वोत्कर्षेण वर्तते । यद्वा महः इत्येव विशेष्यम् । तस्मिन्पक्षे महद्वदनाम्बुजं यस्य तत्तथोक्तमिति बहुव्रीहिः ॥५५॥

राधाकेलिकटाक्षवीक्षितमहावक्षःस्थलीमण्डना
जीयासुः पुलकाङ्कुरास्त्रिभुवनस्तादीपनस्तेजसः ।
क्रीडान्तप्रतिसुप्तदुग्धतनयामुग्धावबोधक्षण-
त्रासारूढदृढोपगूहगहनाः साम्राज्यसान्द्रश्रियः ॥

राधाया गोपिकाविशेषस्य केलिकटाक्षाः विहारप्रधानकटाक्षाः तैर्वीक्षिता दृष्टा सा चासौ महती वक्षःस्थली च । 'आन्महतः समानाधिकरणजातीययोः' इति महच्छब्दस्यात्वम् । विशालवक्षःस्थलीत्यर्थः । तां मण्डयन्ति अलंकुर्वन्तीति तथोक्ताः, क्रीडान्ते रत्यन्ते प्रतिसुप्ता पुनः स्वप्नं प्राप्ता सा चासौ दुग्धतनया क्षीराब्धिजा । रुक्मिणीति यावत् । 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणोक्तेः । तस्याः मुग्धः सुन्दरः अवबोधक्षणः निद्रावसानक्षणः तस्मात् साध्वसं भयं तस्मादारूढमुत्पन्नम् । कृतमिति यावत् । दृढोपगूढो गाढालिङ्गनं तेन गहनाः स्थूलाः । ''दृढोपगूढगहनाः' इति पाठेऽपि नार्थभेदः । साम्राज्यं निरतिशयैश्वर्यं सान्द्रश्रीः अविरलातिशयः येषां ते तथोक्ताः त्रिभुवने अतिशयेन स्वादु स्वादीयः तस्य लोकत्रयेऽपि निरतिशयप्रीतिविषयस्येत्यर्थः । 'द्विवचनविभज्य—' इत्यादिना ईयसुन्प्रत्ययः । तेजसः तेजोरूपस्य कृष्णस्य पुलकाङ्कुराः रोमाञ्चाङ्कुराः जीयासुः सर्वोत्कर्षेण वर्तन्ताम् ॥ ५६ ॥

स्मितस्नुतसुधाधरा मदशिखण्डिबर्हाङ्किता
विशालनयनाम्बुजा व्रजविलासिनीवासिताः ।
मनोज्ञमुखपङ्कजा मधुरवेणुनादद्रवा
जयन्ति मम चेतसश्चिरमुपासिता वासनाः ॥

स्मितेन मन्दहासेन स्नुता स्रुता सा चासौ सुधा अमृतम् । अत्यन्तमधुरिमेत्यर्थः । तस्या धरन्तीति धराः, यद्वा स्मितं स्नौति स्रवतीति स्नुतः । कर्तरि क्तः । मन्दहासयुक्त इत्यर्थः । सुधावदमृतमिवाधरो यासां ताः, मदशिखण्डिनो मत्तमयूरस्य बर्हेणाङ्किताः चिह्निताः, विशाले

नयनाम्बुजे यासां ताः, मञ्जविलासिन्यो घोषयोषितः ताभिर्वासिताः तन्मध्यगा इत्यर्थः। मनोज्ञं सुन्दरं मुखपङ्कजं यासां ताः मधुरो वेणुनादस्य द्रवो यासां ताः, मम चेतसः। चित्तेनेत्यर्थः। 'क्तस्य च वर्तमाने' इति षष्ठी। चिरं बहुकालम् उपासिताः सेविताः वासनाः संस्काराः श्रीकृष्णरूपाः। संस्कारकृष्णयोर्भेदेऽप्यभेद उपचारात्। जयति सर्वोत्कर्षेण वर्तते। सदा मच्चित्तेन ध्यायमानः कृष्णः जयतीत्यर्थः। पूजायां बहुवचनम्॥

जीयादसौ शिखिशिखण्डकृतावतंसा
सांसिद्धिकी सरसकान्तिसुधासमृद्धिः।
यद्बिन्दुलेशकणिकापरिणामभाग्या-
त्सौभाग्यसीमपदमश्नुति पञ्चबाणः॥ ५८॥

पञ्चबाणो मन्मथः यस्याः समृद्धेः बिन्दुः पृषतः तस्य लेशो लवः तस्य कणिका सूक्ष्मावयवः तस्याः परिणामः पाकः स एव भाग्यं तस्मात् सौभाग्यं सौन्दर्यम्। 'हृद्भग-' इत्यादिना उभयपदवृद्धिः। तस्य सीमा उत्तरावधिः तस्याः पदम् अधिष्ठानताम् अश्नुति प्राप्नोति। कृष्णसौन्दर्यलेशवशादेव मन्मथस्यापि सौन्दर्यं तत्पुत्रत्वादेव नान्यथेति भावः। असौ शिखिशिखण्डेन मयूरपिञ्छेन कृतः अवतंसः शेखरो यस्याः सा, सांसिद्धिकी स्वाभाविकी सरसकान्तिः रसयुक्तकान्तिरेव सुधा तस्याः समृद्धिः जीयात् सर्वोत्कर्षेण वर्तताम्॥ ५८॥

आयामेन दृशोर्विशालतरयोरक्ष्णयमार्द्रस्मित-
च्छायाधर्षितशारदेन्दु ललितं चापलयमात्रं शिशोः।

**आयासानपरान्विधूय रसिकैरास्वाद्यमानं मुहु-**
**र्जीयादुन्मदवल्लवीकुचभराधारं किशोरं महः ॥**

अतिशयेन विशालयोर्विशालतरयोः दृशोर्नेत्रयोः आयामेन दैर्घ्येण अक्षुण्णं न्यूनतारहितम् । दीर्घविशालनयनाभ्यामतिसुन्दरमित्यर्थः । आर्द्रं सरसं च तत् स्मितं च तस्य च्छाया कान्तिः तया धर्षितः तिरस्कृतः शरत्कालसंबन्धी स चासाविन्दुश्चन्द्रो येन तत्, ललितमीप्सितम् । 'ललितं हारभेदे स्यादीप्सिते नयनेऽपि च' इति शब्दार्णवे । शिशोर्बालस्य चापल्यमात्रं चापल्यसर्वस्वभूतम् । राशीकृतबालचापल्यरूपमित्यर्थः । उद् अधिकः मदो यासां ताश्च ता वल्लव्यश्च तासां कुचभरः स्तनातिशयः आधारो यस्य तत्, किशोरं बालं महः तेजः जीयात् सर्वोत्कर्षेण वर्तताम् ॥ ५९ ॥

**स्कन्धावारपदं व्रजः कतिपये गोपाः सहायादयः**
**स्कन्धालम्बिनि वत्सदाम्नि धनदा गोपाङ्गनाः स्वाङ्गनाः ।**
**शृङ्गारा गिरिगैरिकं शिव शिव श्रीमन्ति बर्हाणि वा**
**शृङ्गग्राहिकया तथापि तदिदं प्राहुस्त्रिलोकेश्वरम् ॥६०॥**

अस्मिन्पद्ये यद्यपीति पदमध्याहार्यम् । 'स्कन्धावारपदं स्वावासभूमिः व्रजः गोष्ठस्थानम् । 'स्कन्धावारसदो व्रज.' इति पाठान्तरम् । अत्र तु स्कन्धावारं नाम स्वपत्तनं विहाय अन्यत्र गतानां राज्ञां निवेशस्थानं तदेव सदः आस्थानमण्डपः । अनेन समीचीनगृहमपि नास्तीति सूचितम् । गोपाङ्गनाः गोपस्त्रियः स्वाङ्गनाः स्वस्य भार्याः । अनेन राज्ञ्योऽपि नास्तीति सूचितम् । धनदाः करदाः प्रजा. कतिपये केचन

जनाः । न तु सर्वे इति भावः । अनेन धनसंपत्तिर्नास्तीति सूचितम् । वत्सदाम्नि वत्सबन्धनरज्जुविशेषे स्कन्धालम्बिनि सति गोपाः पशुपालकाः सह अयन्ते गच्छन्तीति सहायाः । भटा इत्यर्थः । ते आदिर्येषां ते तथोक्ताः । आदिशब्देन मन्त्र्यादय उच्यन्ते । लोके आयुधधारिणो बुद्धिमन्तश्च भटादयः । वत्सदामधारिणो गोपा आयुधधारिणो न भवन्ति न तु बुद्धिमन्तश्चेति भावः । अनेन परिवारसंपत्तिर्नास्तीति सूचितम् । शृङ्गारा अलंकाराः गिरिगैरिकं पर्वतजन्यधातुविशेषो वा श्रीमन्ति कान्तिमन्ति बर्हाणि वा । अनेन भूषणसंपत्तिर्नास्तीति सूचितम् । तथापि समीचीनगृहाद्यभावेऽपि शृङ्गप्राहिकया इदं कृष्णाख्यं वस्तु तत्प्रसिद्धं प्राप्तं त्रिलोकेश्वरं विष्णुं प्राहुः वदन्ति । वृद्धा इति शेषः । शिव शिवेत्याश्चर्ये ॥ ६० ॥

श्रीमद्बर्हिशिखण्डमण्डनजुषे श्यामाभिरामत्विषे
लावण्यैकरसावसिक्तवपुषे लक्ष्मीसरः प्रावृषे ।
लीलाकृष्टरसज्ञधर्मधमनसे लीलामृतस्रोतसे
के वा न स्पृहयन्ति हन्त महसे गोपीजनप्रेयसे ॥

श्रीमान् कान्तिमान् बर्हिणो मयूरस्य शिखण्डः पिञ्छः स एव मण्डनमलंकारः तज्जुषते भजत इति तथोक्तः तस्मै । मयूरपिञ्छयुतायेत्यर्थः । श्यामा नीला अभिरामा मनोहरा त्विट् कान्तिर्यस्य तस्मै, लावण्यं कान्तिविशेषः तदेकरसः । अत्र एकशब्दः केवलार्थकः । लावण्यमात्ररस इत्यर्थः । तेनावसिक्तमार्द्रीकृतं वपुर्येस्य तस्मै, लक्ष्मीरेव सरः तस्य प्रावृषे वर्षर्तुकालाय । लक्ष्मीवाञ्छितार्थप्रदायेत्यर्थः । लीलाभिर्विलासैः आकृष्टानि रसज्ञानां विदुषां धर्मप्रधानमनांसि येन

तस्मै, लीलैव अमृतस्य स्रोतः प्रवाहः तस्मै, गोपीजनानां प्रेयसे प्रियतमाय । 'द्विवचन-' इत्यादिना ईयसुन् । 'प्रियस्थिर-' इत्यादिना प्रियशब्दस्य प्रादेशः । महसे तेजसे । श्रीकृष्णायेत्यर्थः । के वा न स्पृहयन्ति नेच्छां कुर्वन्ति । सर्वे जना इच्छां कुर्वन्तीत्यर्थः । 'स्पृहेरीप्सितः' इति चतुर्थी ॥ ६१ ॥

आपाटलाधरमधीरविलोलनेत्र-
मामोदनिर्भरितमद्भुतकान्तिपूरम् ।
आविःस्मितामृतमनुस्मृतिलोभनीय-
मामुद्रिताननमहो मधुरं मुरारेः ॥ ६२ ॥

आ समन्तात्पाटलः पाटलवर्णः अधरो यस्य तत्, अधीरे चञ्चले विशेषेण लोले तृष्णायुक्ते नेत्रे यस्य तत्, आविः प्रकाशमानं स्मितममृतमिव यस्य तत्, मुरारेः कृष्णस्य मधुरं सुन्दरं यथा तथा आमुद्रितमीषन्मुकुलितनयनमाननं मुखम्, अनुस्मृत्या निरन्तरस्मरणेन, लोभनीयम् । सदा ध्यातव्यमित्यर्थः । अहो इत्याश्चर्ये । यद्वा अहो इति संबोधने । तथा च हे जनाः, उक्तविशेषणविशिष्टं कृष्णमुखं सदा ध्यातव्यमिति योजनीयम् ॥ ६२ ॥

जागृहि जागृहि चेतो न चिराय कृतार्थता भवतः ।
अनुभूयतामिदमिदं पुरः स्थितं पूर्णनिर्वाणम् ॥ ६३ ॥

हे चेतः हे हृदय, भवतः कृतार्थता धन्यता न चिराय । जातेति शेषः । जागृहि जागृहि निद्रां त्यज । मौढ्यं त्यजेत्यर्थः । संभ्रमेण द्विरुक्तिः । इदमिदं पूर्ववद्द्विरुक्तिः । पुरःस्थितम् अग्रे स्थितं पूर्णनिर्वाणं निरति-

शयसुखम् । श्रीकृष्ण इत्यर्थः । अनुभूयताम् ॥ ६३ ॥

चरणयोररुणं करुणार्द्रयोः
कचभरे बहुलं विपुलं दृशोः ।
वपुषि मञ्जुलमञ्जनमेचके
वयसि बालमहो मधुरं महः ॥ ६४ ॥

अहो इति संबोधने । तथा च हे जनाः, चरणयोः पादयोः अरुणं रक्तवर्णम्, कचभरे शिखायां बहुलमधिकम्, करुणा दया तया आर्द्रयोः सरसयोः दृशोः नयनयोः विपुलं विशालम्, अञ्जनं कज्जलं तद्वत् मेचके नीले वपुषि शरीरे मञ्जुलं सुन्दरम्, वयसि बालं महः तेजः । श्रीकृष्णाख्यमित्यर्थः । मधुरं हृद्यम् । उक्तविशेषणविशिष्टं कृष्णाख्यं वस्त्वेव हृद्यं नान्यदिति भावः ॥ ६४ ॥

मालाबर्हमनोज्ञकुन्तलभरां वन्यप्रसूनोक्षितां
शैलेयद्रवक्लृप्तचित्रतिलकां शश्वन्मनोहारिणीम् ।
लीलावेणुरवामृतैकरसिकां लावण्यलक्ष्मीमयीं
बालां बालतमालनीलवपुषं वन्दे परां देवताम् ॥

माला च बर्हं च ताभ्यां मनोज्ञः सुन्दरः कुन्तलानां केशानां भरः अतिशयो यस्यास्ताम्, वने भवानि वन्यानि तानि च तानि प्रसूनानि पुष्पाणि तैरुक्षितां सिक्ताम् । वन्यपुष्पैरलङ्कृतामित्यर्थः । शिलायाः संबन्धी शैलेयः धातुविशेषः स चासौ द्रवः तेन क्लृप्तं रचितं चित्रतिलकं विचित्रविशेषकं यस्यास्ताम्, शश्वन्मनोहारिणीं सदा

मनोहरणशीलाम् । नित्यसौन्दर्यामित्यर्थः । लीलार्थं वेणुरवः स एव अमृतं तत्र एकरसिकाम् । वेणुगानरसमियमेव जानाति नान्येत्यर्थः । लावण्यलक्ष्मीमयीं बालतमालवनीलं वपुर्यस्यास्तां बालां परां देवतां श्रीकृष्णं वन्दे ॥ ६५ ॥

गुरु मृदुपदे गूढं गुल्फे घनं जघनस्थले
नलिनमुदरे वीरं बाह्वोर्विशालमुरःस्थले ।
मधुरमधरे मुग्धं वक्त्रे विशालविलोचने
बहु कचभरे वन्यं वेषे मनोज्ञमहो महः ॥ ६६ ॥

मृदु कोमलं च तत् पदम् अङ्घ्रिः तस्मिन् गुरु दुर्भरम्, गुल्फे गूढं संवृतम् । गुल्फप्रदेशे अनुन्नतमित्यर्थः । जघनप्रदेशे घनमधिकम्, उदरे कुक्षौ नलिनं तामरसम्, बाह्वोः वीरं शूरम्, उरःस्थले विशालं विपुलम्, अधरे मधुरममृतस्वरूपम्, विशालविलोचने वक्त्रे मुग्धं सुन्दरम्, कचभरे शिखायां बहु अधिकम्, वेषे अलंकारे वन्यं वनजस्य पुष्परूपम्, महः तेजः कृष्णाख्यं मनोज्ञं सुन्दरम् । अहो आश्चर्यम् ॥

जिहानं जिहानं नु जानेन मौग्ध्यं
दुहानं दुहानं सुधां वेणुनादैः ।
लिहानं लिहानं सुदीर्घैरपाङ्गै-
र्महानन्दसर्वस्वमेकं नमेचम् ॥ ६७ ॥

जनसंबन्धि जानम् । यौवनमित्यर्थः । तेन मौग्ध्यं सौन्दर्यं जिहानं जिहानं नु अतिशयेन प्राप्तवन्तं वा, वेणुनादैः सुधाममृतं दुहानं दुहानं

अतिशयेन वर्धन्तं वा, सुदीर्घैः अपाङ्गैः कटाक्षैः लिहानं लिहानं सम्यक्पश्यन्तं वा। सर्वत्र 'नित्यवीप्सयोः' इति द्विर्भावः। महांश्चासावानन्दश्च तत्र सर्वस्वं निरतिशयानन्दस्वरूपम्; एकम् उक्तविशेषणविशिष्टेष्वन्यतमं तं प्रसिद्धं कृष्णं नमेत् नमस्कारं कुर्यात् ॥

लसद्बर्हापीडं ललितललितस्मेरवदनं
भ्रमत्क्रीडापाङ्गं प्रणतजनतानिर्वृतिपदम्।
नवाम्भोदश्यामं निजमधुरिमाभोगभरितं
परं देवं वन्दे परिमिलितकैशोरकरसम् ॥ ६८ ॥

लसत् प्रकाशमानं बर्हमेव आपीडः शिरोमालिका यस्य तम्, ललितललितं सुन्दरसदृशम्। अतिसुन्दरमित्यर्थः। 'प्रकारे गुणवचनस्य' इति सादृश्यार्थे आभीक्ष्ण्ये वा द्विरुक्तिः। कर्मधारयत्वात्सुब्लोपः। स्मेरं मन्दहासयुक्तं वदनं यस्य तम्, भ्रमन्तश्चलन्तः क्रीडापाङ्गाः विलासप्रधानकटाक्षाः यस्य तम्, प्रणता नम्रा सा चासौ जनता जनसमूहः तस्या निर्वृतिः सुखं तस्याः पदं कारणम्, नवाम्भोदः वर्षाकालीनमेघः तद्वत् श्यामं नीलम्, निजः आत्मीयः स चासौ मधुरिमा सौन्दर्यं तस्य आभोगः परिपूर्णता तस्य भरः अतिशयः सोऽस्य संजात इति तथोक्तः तम्, परिमिलिता व्याप्ताः किशोरसंबन्धिनो रसाः गुणाः यस्य तम्, परमुत्कृष्टं देवं कृष्णं वन्दे ॥ ६८ ॥

सारस्यसामग्र्यमिवाननेन
माधुर्यचातुर्यमिव स्मितेन।

तारुण्यकारुण्यमिवेक्षणेन।

चापल्यसाफल्यमिदं दृशोर्मे ॥ ६९ ॥

आननेन, मुखेन सरसस्य भावः सारस्यम्। सौन्दर्यमित्यर्थः। तस्य साम्राज्यमिव समग्रतेव। सौन्दर्यपरिपूर्तिरिवेत्यर्थः। स्मितेन हासेन मधुरस्य भावो माधुर्यं तस्य चातुर्यमिव चमत्कार इव। अत्यन्तहृद्यताविशेष इवेत्यर्थः। ईक्षणेन चक्षुषा तारुण्यं परिपूर्णं तच्च तत्कारुण्यं च तदिव। परिपूर्णदयेव स्थितमित्यर्थः। इदं परिदृश्यमानं कृष्णाख्यं वस्तु मे मम दृशोर्नयनयोः चापल्यं चाञ्चल्यं तस्य साफल्यं फलसंबन्धः। मन्नेत्रचापलस्य कृष्णाख्यं वस्त्वेव फलमित्यर्थः। मन्नेत्रव्यापाराणां मध्ये कृष्णविषयव्यापार एव फलवान् नान्य इति भावः ॥ ६९ ॥

रागान्धगोपीजनवन्दिताभ्यां

योगीन्द्रभृङ्गेन्द्रनिषेविताभ्याम्।

आताम्रपङ्केरुहविभ्रमाभ्यां

स्वामिन्पदाभ्यामयमञ्जलिस्ते ॥ ७० ॥

हे स्वामिन्, रागोऽनुरागः तेन अन्धाः अन्यत्र व्यापारहीनाः। ते च ते गोपीजनाश्च तैर्वन्दिताभ्यां नमस्कृताभ्याम्, योगीन्द्रा मुनिश्रेष्ठाः त एव भृङ्गेन्द्रा भ्रमरश्रेष्ठाः तैर्निषेविताभ्यां नितरामास्वादिताभ्याम्। ध्याताभ्यामित्यर्थः। आताम्रे समन्तात्ताम्रे ते च ते पङ्केरुहे तयोः विभ्रमा विलासा इव ययोस्ताभ्याम्, ते पदाभ्याम् अयमञ्जलिर्नमस्कारः। मया क्रियते इति शेषः ॥ ७० ॥

अर्धानुलापान्व्रजसुन्दरीणा-
मकृत्रिमाणां च सरस्वतीनाम् ।
आर्द्राशयेन श्रवणाञ्चलेन
संभावयन्तं तरुणं गृणीमः ॥ ७१ ॥

व्रजसुन्दरीणां घोषयुवतीनाम् अकृत्रिमाणां कपटरहितानां सरस्वतीनां वाचाम् अर्धस्य एकदेशस्य अनुलापान् पुनः पुनरुच्चारणानि श्रवणयोरञ्चलेन प्रान्तेन आर्द्राशयेन च सरसहृदयेन च संभावयन्तं बहुमन्वानं तरुणं युवानम् । कृष्णमित्यर्थः । गृणीमः उच्चारयामः । 'गॄ शब्दे' इत्यस्माल्लट् ॥ ७१ ॥

मनसि मम संनिधत्तां
मधुरमुखा मन्थरापाङ्गा ।
करकलितललितवंशा
कापि किशोरी कृपालहरी ॥ ७२ ॥

मधुरं सुन्दरं मुखं यस्याः सा तथोक्ता, मन्थरा अपाङ्गाः कटाक्षा यस्याः सा, कराभ्यां कलितो गृहीतः ललितः सुन्दरः वंशो वेणुर्यस्याः सा, कापि वाचामगोचरा किशोरी बाला कृपालहरी दयोत्सेकः, सा मम मनसि संनिधत्तां सम्यक्तिष्ठतु इत्यर्थः ॥ ७२ ॥

रक्षन्तु नः शिक्षितपाशुपाल्या
बाल्यावृता बर्हिशिखावतंसाः ।

प्राणप्रियप्रस्तुतवेणुगीताः
शीता दृशोः शीतलगोपकन्याः ॥ ७३ ॥

शिक्षितमभ्यस्तं पाशुपाल्यं गोरक्षणं याभिस्ताः, बालैरावृताः, बर्हिणो मयूरस्य शिखेव अवतंसः शिरोभूषणं यासां ताः, प्राणवत् प्रियं प्रस्तुतवेणुगीतं श्लाघ्यवेणुगानं यासां ताः। गीतिशीता इति पाठे गीतेन शीता हृद्याः, दृशोर्नयनयोः शीताः अत्यादरेण प्राप्याः, शीतलाः समीचीना गोपकन्या यासां ताः, यद्वा आलिङ्गनादौ औष्ण्यं विहाय शिशिरा गोपकन्या यासां ताः इति वा, नः अस्मान् रक्षन्तु ॥ ७३ ॥

स्मितस्तबकिताधरं शिशिरवेणुनादामृतं
मुहुस्तरललोचनं मदकटाक्षमालाकुलम्।
उरस्तटविलीनया कमलया समालिङ्गितं
भुवःस्थलमुपागतं भुवनदैवतं पातु नः ॥

स्मितेन स्तबकं गुच्छमस्य संजातमिति इतच्। तयोक्तः अधरः यस्य तत्, शिशिरं शीतलम् वेणुनाद एव अमृतं यस्य तत्, मुहुः अत्यन्तं तरले चपले लोचने यस्य तत्, मदप्रधानाः कटाक्षाः तेषां मालया आकुलम्। संतन्यमानकटाक्षयुक्तमित्यर्थः। उरस्तटे विलीनया विद्यमानया कमलया लक्ष्म्या समालिङ्गितम्, भुवः भूमेः स्थलं प्रदेशमुपागतं प्राप्तम्, भुवनानां दैवतं कर्तृ। श्रीकृष्णरूपमित्यर्थः। नः अस्मान् पातु रक्षतु ॥ ७४ ॥

नयनाम्बुजे भजत कामदुघं
हृदयाम्बुजे किमपि कारुणिकम्।

चरणाम्बुजे मुनिकुलैकधनं
वदनाम्बुजे व्रजवधूविभवम् ॥ ७५ ॥

नयनमम्बुजमिव तस्मिन् कामान् वाञ्छितार्थान् दोग्धीति कामदुघम् । 'दुहः कब्घश्च' इति घः । कारणस्वकर्तृकदर्शनमात्रेण भक्तानां सकलसंपत्समृद्धिप्रदमित्यर्थः । हृदयं मनः अम्बुजमिव तस्मिन् किमपि कारुणिकं परमदयालुम् । सदा द्वेषराहित्येन दयावन्तमित्यर्थः । चरणमम्बुजमिव तस्मिन् मुनिकुलानाम् ऋषिसमूहानाम् एकधनं मुख्यधनम् । सदा मुनिध्यातमित्यर्थः । वदनमम्बुजमिव तस्मिन् व्रजवधूनां विभवमैश्वर्यभूतं भजत सेवध्वम् । हे इन्द्रियाणीति शेषः ॥ ७५ ॥

निर्वासनं हन्त रसान्तराणां
निर्वाणसाम्राज्यमिवावतीर्णम् ।
अव्याजमाधुर्यमहानिधान-
मव्याद्व्रजानामधिदैवतं नः ॥ ७६ ॥

रसान्तराणां रसविशेषाणाम् । माधुर्यादिरसविशेषाणामित्यर्थः । निर्वासनं तिरस्कारकम् । ब्रह्मरूपरसापेक्षया इतररसानां तुच्छत्वादिति भावः । तर्हि माधुर्यादिरसतिरस्कारकत्वे कृष्णस्यानुपादेयता स्यादित्याशङ्क्याह—निर्वाणेति । निर्वाणसाम्राज्यमिव मुक्तिसर्वस्वमिव अवतीर्णमवस्थितम्, अव्याजं निरुपाधिकं तच्च तत् माधुर्यं सौन्दर्यम् । भूषणाद्यनपेक्षसौन्दर्यमित्यर्थः । तस्य महानिधानम् अधिकनिक्षेपः, तत् व्रजानामधिदैवतं नियन्तृ । श्रीकृष्णाख्यमित्यर्थः । नः अस्मान् अव्यात् । हन्तेति वाक्यारम्भे हर्षे वा ॥ ७६ ॥

खेलतां मनसि खेचराङ्गना-
माननीयमृदुवेणुनिःस्वनैः ।
कालमेघकलहोद्वहं महः
कानने किमपि नः कृपास्पदम् ॥ ७७ ॥

खेचराणामन्तारिक्षस्थितकिंनरकिंपुरुषाणाम् अङ्गनाभिः माननीया बहुमन्यमानाः ते च ते मृदुवेणुनिःस्वनाश्च । खेचराङ्गनामाननीयेत्यनेन वेणुनादस्यातीव माधुर्यं सूच्यते । तैः कानने बृन्दावने कालमेघेन नीलमेघेन साकं कलहमुद्वहतीति तथोक्तम् । नीलमेघवद्दृश्यमानामित्यर्थः । कृपास्पदं दयाधारम्, किमपि वाचामगोचरं महः तेजः । श्रीकृष्ण इत्यर्थः । नः अस्माकं मनसि खेलतां संचरतु । खेल चलने ॥ ७७ ॥

गोपीनामभिमतगीतवेषहर्षा-
दापीनस्तनभरनिर्भरोपगूढम् ।
केलीनामवतु रसैरुपास्यमानं
कालिन्दीपुलिनचरं परं महो नः ॥ ७८ ॥

अभिमतौ अङ्गीकरणीयौ च तौ गीतवेषौ गानालंकारौ ताभ्यां जनितो हर्षः संतोषः तस्माद्धेतोः, गोपीनाम् । गोपस्त्रीभिरित्यर्थः । 'कस्य च वर्तमाने' इति षष्ठी । आपीनौ स्थूलौ तौ च तौ स्तनौ च तयोः भरः अतिशयः तेन निर्भरं गाढं यथा तथा उपगूढमालिङ्गितम्, केलीनां रसैर्विशेषैः उपास्यमानम् । सकलविलासविशेषयुक्तमित्यर्थः । यद्वा चतुरशीतिविधबन्धविशेषैर्हेतुभिः गोपस्त्रीभिरुपास्यमानमिति वा । कालिन्दी यमुना; तस्याः पुलिनानि सैकतानि तेषु चरतीति तथोक्तम्, परमुत्कृष्टं

महः तेजः । श्रीकृष्णाख्यमित्यर्थः । नः अस्मान् अवतु रक्षतु ॥ ७८ ॥

एणीशावविलोचनाभिरलसश्रोणीभरप्रौढिभि-
र्वेणीभूतरसक्रमाभिरभितः श्रेणीकृताभिर्वृतः ।
पाणी नाम विनोदयन्रतिपतेस्तूणीशयैः सायकै-
र्वाणीनामपदं परं व्रजजनक्षोणीपतिः पातु नः ॥

अलसः मन्दगमनसंपादकः श्रोण्या नितम्बस्य भरः अतिशयः तस्य प्रौढिर्यासां ताभिः नन्दव्रजयुवतिभिरित्यर्थः । वेणीभूतः प्रवाहीभूतः रसानां क्रमः संचारो यासां ताभिः । संतन्यमानरसविशेषयुक्ताभिरित्यर्थः । श्रेणीकृताभिः पङ्क्तितया स्थिताभिः एण्या हरिण्याः शावः शिशुः तस्य विलोचने इव विलोचने यासां ताभिः । नन्दव्रजयुवतिभिरित्यर्थः । अभितः सर्वतः वृत आवृतः, रतिपतेः मन्मथस्य पाणी हस्तौ तूण्यां निषङ्गे शेरत इति तथोक्ताः तैः सायकैः बाणैः विनोदयन् विनोदवन्तौ कुर्वन् । मन्मथतूणीस्थबाणानामवसरं संपादयन्नित्यर्थः । वाणीनां वेदान्तवाक्यानां परमत्यर्थमपदमविषयम् । अभिधया कदाचिदप्यप्रतिपाद्यमानमित्यर्थः । पदशब्दस्य नित्यनपुंसकत्वान्न क्षोणीपतिसामानाधिकरण्यविरोधः । व्रजजनानां गोपीगोपालकानां क्षोणीपतिः राजा नः अस्मान् पातु नाम । नामेति संभवे ॥ ७९ ॥

कालिन्दीपुलिने तमालनिविडच्छाये पुरः संचर-
त्तोये तोयजपत्रपात्रनिहितं दध्यन्नमश्नाति यः ।
वामे पाणितले निधाय मधुरं वेणुं विषाणं कटि-
प्रान्ते गाश्च विलोकयन्प्रतिकलं तं बालमालोकये ॥

यो बालः कटिप्रान्ते कटिवामपार्श्वे स्थाप्यमाने वामे पाणितले । वामगुष्ठाविल्यर्थः । मधुरं मधुरगानसंपादकं वेणुं मुरलीं विषाणं च शृङ्गभूतमुखवाद्यविशेषं च निधाय स्थापयित्वा । कुक्कुटासनया स्थित्वा वेणुविषाणयुक्तवाममुष्टिं कटिवामपार्श्वे स्थापयित्वेत्यर्थः । यद्वा वामे पाणितले वेणुं निधाय कटिप्रान्ते विषाणं निधायेति वा योजनीयम् । प्रतिकलं प्रतिक्षण गाश्च पशूंश्च विलोकयन् पश्यन्, तमालानां तापिञ्छानां निबिडा सान्द्रा च्छाया यस्य तस्मिन् पुरः अग्रे संचरत् प्रवहत् तोयं जलं यस्य तस्मिन् कालिन्दीपुलिने यमुनासैकते तोयजपत्रे तामरसदले तदेव पात्रं तत्र निहितं न्यस्तं मधुरं दध्यन्नम् अश्नाति भुङ्क्ते तं बालं बालकृष्णम् आलोकये पश्यामि ॥ ८० ॥

यद्गोपीवदनेन्दुमण्डनमभूत्कस्तूरिकापत्रकं
यल्लक्ष्मीकुचशातकुम्भकलशे व्याकोचमिन्दीवरम् ।
यन्निर्वाणनिधानसाधनविधौ सिद्धाञ्जनं योगिनां
तन्नः श्यामलमाविरस्तु हृदये कृष्णाभिधानं महः ॥

यत् कृष्णाभिधानं महः गोपीनां वदनानि इन्दव इव तेषां मण्डनमलंकारभूत कस्तूरिकापत्रमेव कस्तूरिकापत्रकं मृगमदतिलकमभूत्, यन्महः लक्ष्म्या रुक्मिण्याः कुचावेव शातकुम्भकलशौ स्वर्णघटी तयोः व्याकोचम् इन्दीवरम् । अभूदिति संबन्धः । यन्महः योगिनां निर्वाणं मुक्तिः तस्य निधानं निक्षेपः तस्य साधनविधौ कारणकलापे सिद्धाञ्जनं निक्षेपप्रदर्शककज्जलविशेषः । यथा चक्षुःसंबद्धमञ्जनं निक्षेपं साधयति तथा कृष्णाख्यं महोऽपि चक्षुःसंबद्धं सत् निर्वाणसाधकमिति भावः । तत् उक्तविशेषणविशिष्टं श्यामलवर्णं कृष्णाभिधानं कृष्णनामकं महः

तेजः नः अस्माकं हृदये आविरस्तु प्रकाशताम् । नैरन्तर्येण प्रतीयतामित्यर्थः ॥ ८१ ॥

फुल्लेन्दीवरकान्तमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतं
गोविन्दं कलवेणुनादनिरतं दिव्याङ्गभूषं भजे ॥

फुल्लेन्दीवरवत् विकसितोत्पलवत् कान्तं मनोहरम्, इन्दुवदनम्, बर्हावतंसप्रियम्, श्रीवत्साङ्कम्, उदार उत्कृष्टः स चासौ कौस्तुभो मणिविशेषः तस्य धरतीति धरम्, पीतमम्बरं वस्त्रं यस्य तम्, सुन्दरम्, अत एव गोपीनां नयनान्येव उत्पलानि तैरर्चिता पूजिता। दृष्टेति यावत्। तनुः शरीरं यस्य तम्, गावश्च गोपाश्च तेषां संघैः समूहैः आवृतम्, कलवेणुनादः अव्यक्तमधुरः अव्यक्तमधुरवेणुगानं तत्र निरतमासक्तम्, दिव्याः श्रेष्ठा अङ्गभूषा अवयवालंकारा हारकेयूरादयो यस्य तं गोविन्दं भजे सेवे। श्रीगोपालकृष्णमन्त्रराजस्य पुरुषार्थचतुष्टयोपयोगि ध्यानमेतत्। तदुक्तं सनत्कुमारसंहितायाम्— 'एवं विन्यस्तदेहः सन्ध्यायेत्कृष्णं हृदम्बुजे। कलायकुसुमश्याममम्भोरुहनिभेक्षणम् ॥ वेणुगानरतं देवं बर्हिबर्हावतंसकम्। दिव्यपीताम्बरधरं पूर्णचन्द्रनिभाननम् ॥ वन्यैस्तमालपुष्पैश्च शोभितं वनमालया। नेत्रोत्पलैश्च नारीणामर्चितं सुन्दराकृतिम् ॥ हारकेयूरमकरकुण्डलोदारभूषणैः। विराजमानं श्रीवत्सकौस्तुभोद्भासितोदरम् ॥ गोपाङ्गनापरिवृतं मूले कल्पतरोः स्थितम्। हेमपीठे सुविमले सर्वरत्नोपशोभिते ॥ रुक्मिणीसत्यभामाभ्यां पार्श्वगाभ्यां विराजिते। गोपालैर्गोसमूहैश्च धन्यसत्त्वैरमत्सरैः ॥ आवृतं देवतावृन्दैः पुष्पवृष्टिकरैः

दिवि । वेणुनादसमाकृष्टचित्तवृत्तिभिरर्चितम् ॥ दिव्येन वेणुनादेन नयन्तं स्ववशं जगत् । एवं गोपाङ्गनानाथं ध्यात्वा हृदयपङ्कजे । समाहितमना भूत्वा जपेन्मन्त्रमनुत्तमम् ' इति ॥

रक्षन्तु त्वामसितजलजैरञ्जलिः पादमूले
मीना नाभीसरसि हृदये मारबाणा मुरारेः ।
हाराः कण्ठे हरिमणिमया वक्त्रपद्मे द्विरेफाः
पिञ्छाचूडाश्चिकुरनिचये घोषयोषित्कटाक्षाः ॥

अस्मिन्पद्ये यत्तच्छब्दावध्याहर्तव्यौ । एवमेव 'धनुः पौष्पं मौर्वी—' इति श्लोके लक्ष्मणभट्टोपाध्यायैरध्याहृतौ । ये कटाक्षाः मुरारेः कृष्णस्य पादमूले असितजलजैः उत्पलैः अञ्जलिः, नाभ्येव सरः तस्मिन् मीनाः शफराः, हृदये वक्षसि मारबाणा मन्मथबाणाः, कण्ठे हरिमणिमया इन्द्रनीलमयाः हाराः कण्ठमालिकाः, वक्त्रमेव पद्मं तस्मिन् द्विरेफाः भ्रमराः, चिकुरनिचये शिरसायां पिञ्छावचूडाः बर्हरूपशेखराः अभूवन्, ते घोषयोषित्कटाक्षाः व्रजस्त्रीजनकटाक्षाः त्वां रक्षन्तु ॥ ८३ ॥

दधिमथननिनादैस्त्यक्तनिद्रः प्रभाते
निभृतपदमगारं बल्लवीनां प्रविष्टः ।
मुखकमलसमीरैराशु निर्वाप्य दीपा-
न्कबलितनवनीतः पातु गोपालबालः ॥

प्रभाते अपररात्रे दध्नो मथनमालोडनं तस्य निनादा ध्वनयः तैः त्यक्ता निद्रा येन स तथोक्तः सन्, बल्लवीनां गोपीनामगारं गृहं निभृ-

तानि मन्दं मन्दं न्यस्तानि पदानि यस्मिन्कर्मणि तद्यथा तथा प्रविष्टः सन्, मुखं कमलमिव तस्य सर्मीरैः। उच्छ्वासैरित्यर्थः। दीपान् आशु शीघ्रं निर्वाप्य ध्वंसयित्वा कवलितं गिलितं नवनीतं येन स तथोक्तः गोपालबालः श्रीकृष्णः पातु रक्षतु। अस्मानिति शेषः॥ ८४॥

प्रातः स्मरामि दधिघोषविधूतनिद्रं
निद्रावसानरमणीयमुखारविन्दम्।
हृद्यानवद्यवपुषं नयनाभिराम-
मुन्निद्रपद्मनयनं नवनीतचोरम्॥ ८५॥

दध्नो घोषः दधिमथनस्य उच्चैर्ध्वनिः तेन विधूता विसर्जिता निद्रा येन तम्, निद्राया अवसाने अन्ते रमणीयं मुखारविन्दं यस्य तम्, हृद्यं मनोहरमनवद्यं दोषरहितं वपुः शरीरं यस्य तम्, नयनयोरभिरामम्। यद्वा नयने अभिरमेते यस्मिन्स तथोक्तस्तमिति वा। उन्निद्रे विकसिते ते च ते पद्मे च ते इव नयने यस्य तम्, नवनीतस्य चोरं बालकृष्णं प्रातः प्रभातकाले स्मरामि॥ ८५॥

फुल्लहल्लकवतंसकोज्ज्वल-
द्गल्लमागमगवीगवेषितम्।
वल्लवीचिकुरवासिताङ्गुली-
पल्लवं कमपि वल्लवं भजे॥ ८६॥

फुल्ले विकसिते हल्लके रक्तसध्यके ते एव अवतंसौ कर्णपूरौ ताभ्यामुज्ज्वलन्तौ प्रकाशमानौ गल्लौ हनुप्रदेशौ यस्य तम्। 'गल्लोऽस्त्री, तत्परा

हनुः' इति शब्दार्णवे । आगमा वेदान्ताः तेषां गावो वाचः । 'स्वर्गेषुपशु वाग्वज्रदङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः । 'गोरतद्धितलुकि' इति गोन्तात्तत्पुरुषाट्टच् । 'टिड्ढाणञ्द्वयसच्—' इत्यादिना ङीप् । ताभिः गवेषितम् । विचारितमित्यर्थः । बल्लवीनां गोपीनां चिकुराः कुन्तलाः तैः वासिताः परिमलिताः अङ्गुल्यः पल्लवा इव यस्य तम् । सदा गोपिकाकेशपाशालंकारिष्णुमित्यर्थः ।। कमपि वाचामगोचरं बल्लव कृष्णं भजे सेवे ॥ ८६ ॥

स्तेयं हरेर्हरति यन्नवनीतचौर्यं
जारत्वमस्य गुरुतल्पकृतापराधम् ।
हत्यां दशाननहतिर्मधुपानगोष्ठीं
यत्पूतनास्तनपयः स पुनातु कृष्णः ॥ ८७ ॥

हरेः कृष्णस्य नवनीतचौर्यं यदस्ति तत् । यत्तदोर्नित्यसंबन्धात्तदिति लभ्यते । वर्णितं सदिति यथालिङ्गं सर्वत्रास्मिन् श्लोके अध्याहार्यम् । स्तेयं चौर्यम् । 'स्तेनाद्यन्नलोपश्च' इति भावार्थे यत् नलोपश्च । हरति नाशयति । कृष्णनवनीतचौर्यं येन पुरुषेण वर्णितं तस्य चौर्यदोषं हरति नाशयति । कृष्णनवनीतचौर्यं येन पुरुषेण वर्णितं तस्य चौर्यदोषं तद्वर्णनं हरतीत्यर्थः । अस्य कृष्णस्य जारत्वमुपपतित्वं वर्णितं सत् गुरुः पिता तस्य तल्पं जाया । 'तल्पं शयनजाययोः' इति शब्दार्णवे । तत्र कृतापराधं क्रियमाणसंसर्गादिकं हरतीति सर्वत्रानुषङ्गः । कृष्ण-जारत्वं वर्णितं सत् मातृगमनदोषं हरतीत्यर्थः । हरेः हरिकर्तृकेत्यर्थः । दशाननस्य रावणस्य हतिः वधः वर्णिता सती हत्यां ब्रह्महत्यां हरति, यस्य कृष्णस्य पूतनायाः स्तनयोः पयः । पयःशब्देन पयःपानं लक्ष्यते । कृष्णकर्तृकपूतनास्तनपयःपानं वर्णितं सत् मधुपानगोष्ठीं मद्यपानदोषं

विहाय कोदण्डशरौ मुहूर्तं
गृहाण पाणौ मणिचारुवेणुम् ।
मयूरबर्हं च निजोत्तमाङ्गे
सीतापते राघव रामचन्द्र ॥ ९२ ॥

हे सीतापते राघव रामचन्द्र, कोदण्डशरौ धनुर्बाणौ विहाय त्यक्त्वा पाणौ हस्ते मणिभिः चारुं वेणुम्, निजमात्मीयम् । 'निजमात्मीय-नित्ययोः' इत्यमरः । तच्च तत् उत्तमाङ्गं शिरः तस्मिन् मयूरबर्हं च मुहूर्तं क्षणमात्रं गृहाण धारय । तदनन्तरं नमस्करोमीति शेषः । 'सीतापते त्वां प्रणमामि पश्चात्' इति समीचीनः पाठः । शेषादाना-भावात् ॥ ९२ ॥

अयं क्षीराम्बोधेः पतिरिति गवां पालक इति
श्रितोऽस्माभिः क्षीरोपनयनधिया गोपतनयः ।
अनेन प्रत्यूहो व्यरचि सततं येन जननी-
स्तनादप्यस्माकं सकृदपि पयो दुर्लभमभूत् ॥

अयं गोपतनयः कृष्णः क्षीराम्भोधेः क्षीरसमुद्रस्य पतिरिति हेतोः गवां पशूनां पालक इति हेतोः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इति शब्दार्णवे । एतद्विशेषणद्वयेन क्षीराधिक्यं सूच्यते । क्षीरोपनयनं क्षीरप्राप्तिः तस्य धिया । मम क्षीरं दास्यतीति बुद्ध्या इत्यर्थः । अस्माभिः श्रितः आश्रितः । अनेन कृष्णेन सततं सदा प्रत्यूहः क्षीरप्राप्तेर्विघ्नः व्यरचि कृतः । कर्मणि लुङ् । येन कारणेन अस्माकं जननीस्तनादपि पयःपानं सकृदपि एकवारमपि दुर्लभं दुःखेनापि प्राप्तुमशक्यमभूत्,

तेन कारणेन प्रत्यूहः कृत इत्यर्थः । कृष्णभक्तस्य मुक्तत्वेन पुनर्जनना-भावान्मातृस्तन्यपानाप्रसक्तिरिति भावः ॥ ९३ ॥

ध्यानेन पुरः प्रसन्ने कृष्णे हस्तेन गृहीते सति हस्तं तिरस्कृत्य गतवन्तं कृष्णं प्रत्याह—

**हस्तमाक्षिप्य यातोऽसि बलात्कृष्ण किमद्भुतम् ।**
**हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥ ९४ ॥**

हे कृष्ण, बलात् हस्तमाक्षिप्य तिरस्कृत्य यातोऽसि गतोऽसि । इदमद्भुतं किम् आश्चर्यं किम् ? नाश्चर्यमित्यर्थः । हृदयात् निर्यासि निर्गच्छसि यदि तदा ते तव पौरुषं पुंस्त्वं गणयामि संख्याविषयं करोमि । मम हृदयं सदा त्वां विहाय न प्रवर्तते । अतोऽन्यत्र गन्तुं न शक्यते त्वयेति भावः ॥ ९४ ॥

**तमसि रविरिवोद्यन्मज्जताम्बुराशौ**
**प्लव इव तृषितानां स्वादुवर्षीव मेघः ।**
**निधिरिव निधनानां दीर्घतीव्रामयानां**
**भिषगिव कुशलं नो दातुमायातु शौरिः ॥**

तमसि अन्धकारे मज्जतां स्थितानाम् उद्यन् आविर्भवन् रविरिव सूर्य इव अम्बुराशौ समुद्रे जलाशये मज्जतां प्लव इव उडुप इव । मज्जनस्यावृत्त्या योजना । तृषितानां पिपासूनां स्वादुवर्षी समीचीनवर्षी मघे इव, निर्धनानां दरिद्राणां निधिरिव निक्षेप इव, दीर्घः बहुकालव्यापी तीव्रः कार्येण पीडाकरः आमयः व्याधिः येषां तेषां भिषगिव वैद्य इव नः अस्माकं कुशलं क्षेमं दातुं शौरिः श्रीकृष्णः आयातु आगच्छतु ॥ ९५ ॥

कोदण्डं मसृणं सुगन्धि विशिखं चक्राब्जपाशाङ्कुशं
हैमीं वेणुलतां करैश्च दधतं सिन्दूरपुञ्जारुणम् ।
कंदर्पाधिकसुन्दरं स्मितमुखं गोपाङ्गनावेष्टितं
गोपालं मदनाधिपं तमभजं त्रैलोक्यरक्षामणिम् ॥

मसृणं रचिमत् । ऐक्षवमित्यर्थः । कोदण्डं चापम्, शोभनो गन्धोऽस्य सुगन्धि । 'गन्धस्येत्–' इत्यादिना गन्धशब्दस्य इदादेशः । पुष्पमित्यर्थः । तदेव विशिखं बाणम्, चक्रं सुदर्शनं च अब्जः शङ्खश्च पाशश्च अङ्कुशश्च तत्तथोक्तम् । सेनाङ्गत्वादेकवद्भावः । हेम्नः इयं हैमी ताम् । सुवर्णमयीमित्यर्थः । 'अनुदात्तादेश्च' इत्यजन्तत्वेन अणन्तत्वाभावात् प्रकृतिभावः । 'टिड्ढाणञ्–' इत्यादिना ङीप् । वेणुर्लतेव । सुवर्णमयवेणुं चेत्यर्थः । अत्रत्यचकारोऽनुक्तसमुच्चयार्थः । तथा च पद्म-गदे अपि समुचिनोति । करैर्हस्तैः दधतं गृह्णन्तम् । 'नाभ्यस्ताच्छतुः' इति न नुम् । सिन्दूरो रक्तवर्णद्रव्यविशेषः तस्य पुञ्जवत् समूहवत् अरुणं रक्तवर्णम्, कंदर्पान्मन्मथात् अधिकसुन्दरं अतिसौन्दर्ययुक्तम् । अनेन सकलभूषणभूषितत्वं पीताम्बरत्वं चोक्तम् । स्मितं मुखे यस्य तम्, गोपाङ्गनाभिः वेष्टितं तं प्रसिद्धं गोपालम् । इदमुपलक्षणम् । लक्ष्म्या आलिङ्गितं सुरदानवनागकन्याभिरप्यावृतमिति बोध्यम् । त्रिलोका एव त्रैलोक्यम् । स्वार्थे ष्यञ् । तस्य रक्षा रक्षणं तस्यां मणिम् । अतिशयेन रक्षकमित्यर्थः । मदनाधिपम् । सुन्दरजनश्रेष्ठमित्यर्थः । तं गोपालकृष्णम् अभजम् सेवामकरवम् । 'भज सेवायाम्' इत्याल्लङ् । उत्तमैकवचनम् । श्रीगोपालकृष्णत्रैलोक्यमोहनमन्त्रस्य ध्यानमेतत् । तदुक्तं सनत्कुमारसं-हितायाम्—'दुग्धाब्धिमध्यगमणिद्वीपदेदीप्यकानने । मण्डपे यं दिव्य-तरोर्मणिपीठे गरुत्मतः ॥ आसीनमरविन्दाक्षमरुणं रुचिराकृतिम् । अरु-

णालेपरुच्याश्मापीतवसनोज्ज्वलम् ॥ किरीटकुण्डलमणिग्रैवेयाङ्गदहारिणम् । श्रीवत्सकौस्तुभधरं काञ्चीकङ्कणमुद्रितम् ॥ इक्षुचापं पद्मगते चाददानं कराम्बुजैः । रमया रमणीयाभ्यां स्मरविह्वलगात्रया ॥ आश्लिष्टमिक्षुचापाभ्यां बाहुनाश्लिष्टयेद्धया । सुरदानवगन्धर्वनागकन्यागणैर्वृतम् ॥ वरवेषाम्बरालेपभूषणैः स्मरविह्वलैः । नानोपायनसंयुक्तैर्नानालेपस्रगुज्ज्वलैः । एवं ध्यात्वा मभलक्ष्यं मन्त्रद्वितयमभ्यसेत् ॥' इति ॥ ९६ ॥

दशाक्षरीमन्त्रराजाभ्यां मन्त्रिणो वैकल्पिकार्धरात्रपूजाविषयं कृष्णमाह—

**सायंकाले वनान्ते कुसुमितसमये सैकते चन्द्रिकायां**
**त्रैलोक्याकर्षणाङ्गं सुरनरगणिकामोहनापाङ्गमूर्तिम् ।**
**सेव्यं शृङ्गारभावैर्नवरसभरितैर्गोपकन्यासहस्रै-**
**र्वन्देऽहं रासकेलीरतिमतिसुभगं वश्यगोपालकृष्णम् ॥**

कुसुमान्यस्य सन्तीति कुसुमितः स चासौ समयश्च । वसन्तकाल इत्यर्थः । तस्मिन् वनान्ते वनमध्ये सायंकाले रात्रौ चन्द्रिकायां सत्याम्, सैकते पुलिने त्रयाणां लोकानां समाहारस्त्रिलोकी सैव त्रैलोक्यम् । स्वार्थे ष्यञ् । तदाकृष्यते यैराकर्षणानि । करणे ल्युट् । तादृशान्यङ्गानि यस्य तम्, सुराश्च नराश्च तेषां गणिका वारवनिताः तासां मोहनी मोहसंपादिका अपाङ्गमूर्तिः कटाक्षविक्षेपः यस्य तम्, नवरसानां नवत्वसंख्याकरसानाम् । शृङ्गारादीनामित्यर्थः । यद्वा क्षणे क्षणे नूतनरसानां भरः अतिशयः येषां संजातः तैः गोपकन्यासहस्रैः शृङ्गारभावैः शृङ्गारचेष्टाभिः सेव्यं भजनीयम्, रासकेली रससंबन्धी विलासः तस्यां रतमासक्तम्, अतिसुभगमतिसुन्दरम्, वश्य इष्यमाणः । सर्वजनकामनाविषय इत्यर्थः ।

**नीलग्रीवाग्र्यपिञ्छाकलनसुविलसत्कुन्तलं भानुमन्तं देवं पीताम्बराढ्यं यज यज दिनशस्त्वं रमायै मुकुन्दम् ॥**

देवैरिन्द्रादिभिः वन्द्यं नमस्कार्यं स्तवनीयं वा, विकसितकुरुविन्दानां देदीप्यमानपद्मरागाणामाभेवाभा यस्य तम्, इन्दीवरे उत्पले इव अक्षिणी यस्य तम्। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्। गोपीनां गवां च वृन्दैः समूहैः वीतमावृतम्, जिता रिपुनिवहाः शत्रुसमूहा येन तम्, कुन्दानि च मन्दाराणि च तानीव हासो यस्य तम्, नीलग्रीवाणां मयूराणाम् अग्र्यपिञ्छस्य श्रेष्ठकलापस्य आकलनं प्रथनं तेन सुविलसन्तः अतिशयेन प्रकाशमानाः कुन्तलाश्चिकुरा यस्य तम्, भानुमन्तं नूपुरादिसकलभूषणैरुज्ज्वलाङ्गम्, पीताम्बरेणाढ्यम्, देवं प्रकाशमानं धनिकं वा । पीताम्बरावेष्टितमित्यर्थः । मुकुन्दं श्रीकृष्णं दिने दिने दिनशः । 'संख्यैकवचनाच्च वीप्सायाम्' इति प्रथम्येकवचनान्तदिनशब्दाद्वीप्सायां शस् । प्रतिदिनमित्यर्थः । मध्याह्ने मध्याह्नकाले रमायै संपत्त्यै यज यज पूजय । संभ्रमेण द्विरुक्तिः । हे साधकेति शेषः। तदुक्तं क्रमदीपिकायाम्—'मध्यदिने च प्रविधानविशिष्टरूपं वन्द्यं सुरर्षियतिखेचरमुख्यवृन्दैः । गोगोपगोपवनितानिकरैः परीतं सान्द्राम्बुदच्छविसुजातमनोहराङ्गम् ॥ मायूरपिञ्छपरिक्लृप्तवतंसरम्यधम्मिल्लमुल्लसितवल्गितमम्बुजाक्षम् । पूर्णेन्दुबिम्बवदनं मणिकुण्डलश्रीगण्डं सुनासमतिसुन्दरमन्दहासम् ॥ पीताम्बरं रुचिरनूपुरहारकाञ्चिकेयूरकोर्मिकटकादिभिरुज्ज्वलाङ्गम् । दिव्यानुलेपितपिशङ्गितमंसराजदम्लानचित्रवनमालमनङ्गदीप्तम् ॥ वेणुं क्वणन्तमथ वामकरे दधानं सव्येतरे पशुपयष्टिमुदारवेणुम् । दक्षे मणिप्रवरमीप्सितदानदक्षं ध्यात्वा समर्पयतु नन्दजामिन्दिरायै ॥ ९९ ॥

दशाक्षरीमन्त्रराजाभ्यां मन्त्रिण· सायंकालपूजाविषयं कृष्णमाह—

चक्रान्तध्वस्तवैरिव्रजमजितमपास्तावनीभारमाद्यै-
रावीतं नारदाद्यैर्मुनिभिरभिनुतं तत्त्वनिर्णीतिहेतोः ।
मन्त्री तं निर्मलाङ्गं निरुपमरुचिरं चिन्तयेन्नीलभासं
सायं विश्वोदयस्थित्यपहरणपदं मुक्तिदं वासुदेवम् ॥

मन्त्री गोपालमन्त्रजपशीलः सायं सायंकाले चक्रान्तेन सुदर्शनाग्रेण ध्वस्ताः छिन्नाः वैरिव्रजाः शत्रुसमूहाः येन तम् । 'व्रजो गोष्ठाध्वनिवहाः' इत्यमरः । अत एव अजितं जेतुमशक्यम्, अपास्तः उत्सारितः अवनीभारः भूभारो येन तम्, आद्यैः ब्रह्मादिभिः आवीतमावृतम्, नारदाद्यैर्मुनिभिः तत्त्वनिर्णीतिहेतोः तत्त्वनिर्णयार्थम् । केचित् जीवब्रह्मणोर्भेदः पारमार्थिक इति केचिदौपाधिक इति वदन्ति किं वा तत्त्वमिति तत्त्वनिर्णयार्थमित्यर्थः । अभिनुतं स्तूयमानम्, निर्मलानि परिशुद्धान्यङ्गानि यस्य तम्, निरुपमरुचिरं युवानम्, नीलभासं नीलवर्णम्, विश्वस्य जगतः उदयस्थित्यपहरणपदम् उत्पत्तिस्थितिलयकारणम् । पदशब्देनाभिन्ननिमित्तोपादानकारणमिति सूच्यते । मुक्तिं ददातीति मुक्तिदः तम् । 'आतोऽनुपसर्गे कः' इति कः । वसुदेवस्यापत्यं पुमान्वासुदेवः तम् । श्रीकृष्णमित्यर्थः । चिन्तयेत् पूजयित्वा ध्यायेदित्यर्थः । तदुक्तं क्रमदीपिकायाम्— 'तृतीयकालपूजायामस्ति कालविकल्पिका । सायाह्ने निशि वेत्यत्र वदन्त्येके विपश्चितः ॥ दशाक्षरेण चेद्रात्रौ सायाह्नेऽष्टादशार्णतः । उभयोरुभयेनैव कुर्यादित्यपरे जगुः ॥ सायाह्ने द्वारवत्यां तु विचित्रोद्यानशोभिते । हंससारससंकीर्णैः कमलाकरशालिभिः ॥ सरोभिरमलाम्भोभिः परीते भवनोत्तमे । उद्यत्प्रद्योतनोद्भूतस-

युतौ मणिमण्डपे ॥ मृद्वास्तरे समासीनं हेमाम्भोजासने हरिम् । नारदाद्यैः परिवृतमात्मतत्त्वविनिर्णये ॥ तेभ्यो मुनिभ्यः सद्धाम दिशन्तं परमाक्षरम् । इन्दीवरनिभं सौम्यं पद्मपत्रायतेक्षणम् । चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् । श्रीवत्सवक्षःसंभ्राजत्कौस्तुभं वनमालिनम् ॥ काश्मीरकपिशोरस्कं पीतकौशेयवाससम् । हारकेयूरमकररशनाद्यैः परिष्कृतम् ॥ हृतविश्वंभराभूरिभारं मुदितमानसम् । शङ्खचक्रगदापद्मराजद्भुजचतुष्टयम् ॥ एवं ध्यात्वार्चयेन्मन्त्री स्वाङ्गैः प्रथमावृतिः ॥' इत्यादि ॥ १०० ॥

त्रैलोक्यसंमोहनमन्त्रद्वयस्य ध्यानविशेषमाह—

> कोदण्डमैक्षवमखण्डमिषुं च पौष्पं
> चक्राब्जपाशसृणिकाञ्चनवंशनालम् ।
> बिभ्राणमष्टविधबाहुभिरर्कवर्णं
> ध्यायेद्धरिं मदनगोपविलासवेषम् ॥ १०१ ॥

इक्षुसंबन्धि ऐक्षवम्, अखण्डं दृढं कोदण्डं चापम्, पुष्पसंबन्धिनमिषुं बाणं च, चक्रं सुदर्शनम् अब्जः शङ्खः पाशो रज्जुः सृणिरङ्कुशः काञ्चनवंशनालं स्वर्णवेणुं च । 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इत्येकवद्भावः । अष्टविधबाहुभिः । अष्टाभिर्बाहुभिरित्यर्थः । बिभ्राणं दधतम् । भित्यादित्वविक्षाभेदे आत्मनेपदम् । अर्कवर्णं सूर्यवर्णम्, मदनगोपस्य विलासविशेषो यस्य तम्, हरिं ध्यायेत् । द्वाभ्यां बाहुभ्यां वेणुः द्वाभ्यां धनुर्बाणौ द्वाभ्यां शङ्खचक्रे द्वाभ्यां सृणिपाशौ इत्ययमनामुपयोग इति ध्येयम् ॥ १०१ ॥

या प्रीतिर्विदुरार्पिते मुररिपो कुन्त्यर्पिते यादृशी
या गोवर्धनमूर्ध्नि या च पृथुके स्तन्ये यशोदार्पिते ।
भारद्वाजसमर्पिते शबरिकादत्तेऽधरे योषितां
या प्रीतिर्मुनिपत्निभक्तिरचितेऽप्यत्रापि तां तां कुरु ॥

इति श्रीलीलाशुकविरचिते श्रीकृष्णकर्णामृते
तृतीय आश्वासः ।

हे मुररिपो हे कृष्ण, विदुरार्पिते । दौत्यार्थमागतवेलायां विदुरार्पित इत्यर्थः । अन्ने या प्रीतिः संतोषः, कुन्त्या पाण्डुपत्न्या अर्पिते समर्पिते यादृशी प्रीतिः, गोवर्धनमूर्ध्नि । गोपालार्पितान्ने इति शेषः । या प्रीतिः, पृथुके कुचेलार्पितचिपिटे या प्रीतिः संतोषः, यशोदयार्पिते दत्ते स्तन्ये या प्रीतिः, भारद्वाजसमर्पिते रामवनवासवेलायां प्रयागे भारद्वाजदीयमानफलादावित्यर्थः । या प्रीतिः, शबरिकादत्ते मतङ्गाश्रमे शबरिकया दत्ते कन्दमूलफलादावित्यर्थः । या प्रीतिः, मुनिपत्निभिः भक्त्या रचिते या प्रीतिः । बृन्दावने यज्ञपत्नीभिरानीयमानान्ने इत्यर्थः । अत्र मत्प्रणीतकर्णामृतग्रन्थेऽपि तां ताम् । संभ्रमेण द्विर्भावः । कुरु ॥ १०२ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणपशुपतिरुमल्लभट्टोपाध्यायपुत्रेण कोदण्डमाम्बागर्भशुक्तिमुक्तामणिना पापयल्लयसूरिणा विरचितायां
श्रीकृष्णकर्णामृतव्याख्यायां
स्वर्णचषकसमाख्यायां
तृतीय आश्वासः ॥

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

